ॐ

# VEDA MATA SRI GAYATRI

*A Handbook of Veda Mata Sri Gayatri Worship*




***Compiled By***

***K. Muralidharan***

**Email: kmurali_sg@yahoo.com**

**[July 2004]**



# Table of Contents



## ॥ गणपति प्रार्थना ॥

ॐ गणानां त्वा गणपतिꣳ हवामहे कविं कवीना मुपमश्रवस्तमम्।
ज्येष्ठ राजं ब्रह्मणां ब्रह्मणस्पत आ नः श्रुण्वन्नूतिभिस्सीद सादनम्॥

गजाननं भूत गणाधि सेवितं कपित्थ जम्बू फलसार भक्षकम्।
उमासुतं शोक विनाश कारणं नमामि विघ्नेश्वर पाद पङ्कजम्॥

वक्र तुण्ड महाकाय कोटिसूर्य समप्रभ।
अविघ्नं कुरु मे देव सर्व कार्येषु सर्वदा॥





Several great sages have expounded the greatness of Shri Gayatri Mata and Gayatri Mantram. Several books are also available. Perhaps the following two verses would summarize the essence clearly and succinctly.

गायत्री वेद जननी गायत्री पाप नाशिनी ।
गायत्र्या ऽ स्तु परं नास्ति दिवि चेह च पावनम् ॥
– श्री योग वाल्क्यः

Shri Yogavalkya Maharishi declares that Shri Gayatri is the mother of all Vedas (in other words, the essence of all Vedas) and is the destroyer of all sins; there is nothing beyond Shri Gayatri in both Bhu loka and Deva loka.

गायत्री वेद जननी गायत्री लोक पावनी ।
न गायत्र्याः परं जप्यं एतत् विज्ञानं उच्यते ॥
- कूर्म पुराणम्

The above sloka from Kurma Puranam, while emphasizing that Shri Gayatri Devi is the mother of all Vedas, declares beyond doubt that Shri Gayatri purifies and sanctifies the Universe and there is no other Mantra that is beyond Gaytri Mantram and it indeed is Vigyanam.

The References/Links section of this compilation points to various sources of information on Shri Gayatri Devi, Gayatri Mantram, etc.

## GAYATRI MANTRAM

ओम् । भूर्भुवस्सुवः । तत्सवितुर् वरेण्यम् ।
भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

## MEANING OF GAYATRI MANTRAM

| Word | Meaning |
|---|---|
| ओम् | The primeval sound |
| भूर् | The Physical World |
| भुवः | The Mental World |
| सुवः | The Spiritual World |
| तत् | That (Transcendental Paramatma) |
| सवितुर् | The Sun; the Creator |
| वरेण्यम् | The most adorable; highest |
| भर्गो | Luster, Effulgence, Tejas |
| देवस्य | Resplendent, Supreme Lord |
| धीमहि | We Meditate Upon |
| धियो | The intellect, understanding |
| यो | Who (May This Light) |
| नः | Our |
| प्रचोदयात् | Enlighten, Guide, Inspire |

MEANING

**We meditate on the most adorable Supreme Spirit (radiant Sun) who directs and inspires our intelligence and understanding.**

## OTHER GAYATRI MANTRAS

### Turiya Gayatri Mantram (तुरीय गायत्री मन्त्रः ।)

**परो रजसे सावदोम् ।**

The above Turiya Gayatri Mantra is considered to be very sacred. There are differing accounts as to whether this mantra can be chanted by one and all or it requires formal initiation into this mantra by a Sat Guru. But according to Srimad Devi Bhagavatham, this mantra must be chanted as part of daily Anushtanam (Sandhavandana) immediately after Gayatri Japa. Those who would like to chant this mantra are advised to seek the guidance of eminent scholars.

### Poorna Gayatri Mantram (पूर्ण गायत्री मन्त्रः ।)

**ओम् भूर्भुवस्सुवः । ओम् क्लीं तत् सवितुर् वरेण्यम् । ओम् ह्रीं भर्गो देवस्य धीमहि । ओम् श्रीं धियो यो नः प्रचोदयात् । ओम् प्लूम् सौं परो रजसे सावदोम् । ओम् ऐं आपः ज्योतीरसः अमृतं ब्रह्म । ओम् भूर्भुवस्सुवरोम् ॥**

The above Gayatri Mantra contains the important Bijakshara (Seed) Mantras of various forms of Shakti (Kameshvari, Maha Lakshmi, Sarasvati, Bhuvaneshvari). Chanting this gives the benefit of meditating on all these forms. But it is important to note that this mantra should NEVER be chanted without proper initiation through a Sat Guru.

### Sanjivini Vidya Mantram (सञ्जीविनी विद्या मन्त्रः ।)

**ओम् त्र्यम्बकम् यजामहे । ओम् भूर्भुवस्सुवः तत् सवितुर् वरेण्यम् । ओम् सुगन्धिं पुष्टि वर्धनम् । ओम् भर्गो देवस्य धीमहि । ओम् उर्वारुकमिव बन्धनात् । ओम् धियो यो नः प्रचोदयात् । ओम् मृत्योर् मुक्षीय मा ऽ मृतात् ॥**

The above mantra, containing 56 Aksharas (syllables), is a blend of Gayatri Mantra and Mrutyunjaya Mantra. It is said that this mantra was meditated upon by Shukracharya, Ravanan, Sage Vishvamitra and later by Sage Vasishta, Sage Parashara, Sage Atri, Sage Jamatagni, Shri Anjaneya etc. But it is important to note that this mantra should NEVER be chanted without proper initiation through a Sat Guru.



# ॥ श्री गायत्री ध्यान श्लोकाणि ॥
## Sri Gayatri Dhyana Slokas

A few Dhyana Slokas for Gayatri, Savitri and Saraswati are given below. These slokas are drawn from various sources such as Devi Bhagavatam. This is not exhaustive.

### ॥ गायत्री ॥

मुक्ता विद्रुम हेम नील धवलच् छायैर् मुखैस् त्रीक्षणैः
युक्तां इन्दु निबद्ध रत्न मकुटां तत्त्वार्थ वर्णात्मिकाम्।
गायत्रीं वरदा ऽ भया ऽ ङ्कुश कशाः शुभ्रं कपालं गुणं।
शङ्खं चक्रमथा ऽ रविन्द युगलं हस्तैर् वहन्तीं भजे ॥ १ ॥

रक्त श्वेत हिरण्य नील दवळैर् युक्तां त्रिनेत्रोज्ज्वलाम्।
रक्तां रक्त नवस्रजं मणी गणैर् युक्तां कुमारीं इमाम्।
गायत्रीं कमलासनां कर तल व्यानद्ध कुण्डाम्बुजां।
पद्माक्षीं च वरस्रजं च दधतीं हंसाधिरूढां भजे ॥ २ ॥

उद्यद् आदित्य संकाशं पुस्तका ऽ क्ष करां स्मरेत्।
कृष्णाजिन धरां ब्राह्मीं ध्ययेत् तारकितेम्बरे ॥ ३ ॥

श्याम वर्णां चतुर् बाहुं शंख चक्र लसद् कराम्।
गदा पद्म करां देवीं सूर्यासन कृतास्त्रयाम् ॥ ४ ॥

शुक्लां शुक्लाम्बर धरां वृषासन कृतास्त्रयाम्।
त्रिनेत्रां वरदां पाशं शूलं च नृकरोटिकाम् ॥ ५ ॥

श्वेत वर्णा समुत्तिष्ठा कौशेय वसना तथा।
श्वेतैर् विलेपनैः पुष्पैः अलङ्कारैस् च भूषिता ॥

आदित्य मण्डलस्था च ब्रह्म लोक गता तथा।
अक्ष सूत्र धरा देवी पद्मासन गता शुभा ॥ ६ ॥

अक्षः स्त्रक् कुण्टिका हस्तां शुद्ध स्फटिक निर्मलाम्।
सर्व विद्यामयीं वन्दे गायत्रीं वेद मातरम् ॥ ७ ॥

ततो ध्यायेन् महादेवीं जगन्मातर् अम्बिकाम्।
भास्वज्जपा प्रसूनाभां कुमारीं परमेश्वरीम् ॥

## ॥ श्री गायत्री ध्यान श्लोकाणि ॥

रक्ताम्बुजा ऽ सनारूढां रक्त गन्धा ऽ नुलेपनाम् ।
रक्त माल्याम्बर धरां चतुरास्यां चतुर् भुजाम् ॥
द्विनेत्रां स्त्रुक् स्त्रुचौ मालां कुण्डिकां चैव बिभ्रतीम् ।
सर्वाभरण सन्दीप्तां ऋग्वेदा ऽ ध्यायिनीं पराम् ॥
हंस पत्रां आवहनीय मध्यस्थां ब्रह्म देवताम् ।
चतुष्पदां अष्ट कुक्षिं सप्त शीर्षाम् महेश्वरीम् ॥
अग्नि वक्त्रां रुद्र शिखां विष्णु चित्तां तु भावयेत् ।
ब्रह्मा तु कवचं यस्या गोत्रं सांख्यायन स्मृतम् ॥
आदित्य मण्डला ऽ न्तस्थां ध्यायेद् देवीं महेश्वरीम् ॥ ८ ॥

**॥ सावित्री ॥**

सावित्रीं युवतीं श्वेत वर्णाम् चैव त्रिलोचनाम् ॥
वरदां चा ऽ क्ष मालाढ्यां त्रिशूला ऽ भय हस्तकाम् ।
वृषारुढां यजुर्वेद सहितां रुद्र देवताम् ॥
तमो गुण युतां चैव भुवर्लोक व्यवस्थिताम् ।
आदित्य मार्ग संचार कर्त्रीम् मायां नमाम्यहम् ॥ १ ॥

**॥ सरस्वती ॥**

वृद्धां सरस्वतीं देवीं कृष्णाङ्गीं कृष्ण वाससम् ॥
शंख चक्र गदा पद्म हस्तां गरुड वाहनाम् ।
नाना रत्न लसद् भूषां क्वणन् मंजीर मेखलाम् ॥
अनर्घ्य रत्न मुकुटां तार हारावाली युताम् ।
ताटंक बद्ध माणीक्य कान्ति शोभि कपालिकाम् ॥
पीताम्बर धरां देवीं सच्चिदानन्द रूपिणीम् ।
सामवेदेन सहितां संयुतां सत्त्वत्मना ॥
व्यवस्थितां च स्वर्लोके आदित्य पथ गामिनीम् ।
आवाहयाम्यहम् देवीं आयान्तीं सूर्य मण्डलात् ॥ १ ॥



## ॥ श्री गायत्री आवाहन उपस्थान मन्त्राः ॥

## Sri Gayatri Avahana/Upasthana Mantras

The following Gayatri Avahana/Upasthana mantras are available in Maha Narayana Upanishad in Rig Veda [Prsna : 4, Anuvaka : 34-36]. Parts of these mantras are used for Gayatri Avahanam/Upasthanam in Sandhya Vandanam.

### ॥ श्री गायत्री आवाहन मन्त्राः ॥

आयातु वरदा देवी अक्षरं ब्रह्म संमितम्। गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे। यदह्नात् कुरुते पापं तदह्नात् प्रतिमुच्यते। यद्रात्रियात् कुरुते पापं तद्रात्रियात् प्रतिमुच्यते। सर्व वर्णे महादेवी सन्ध्याविद्ये सरस्वती ॥

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायुर् सर्वमसि सर्वायु रभिभूरों गायत्री मावाहयामि सावित्री मावाहयामि सरस्वती मावाहयामि छन्दर्षी नावाहयामि श्रिय मावाहयामि गायत्रिया गायत्रीच्छन्दो विश्वामित्र ऋषिरस्सविता देवता ऽ ग्निर्मुखं ब्रह्मा शिरो विष्णुर् हृदयꣳ रुद्रश् शिखा पृथिवी योनिः प्राणापान व्यानोदान समाना सप्राणा श्वेतवर्णा साङ्ख्यानस गोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदां षट्कुक्षिः पञ्च शीर्षोपनयने विनियोग ओं भूः। ओं भुवः। ओꣳ सुवः। ओं महः। ओं जनः। ओं तपः। ओꣳ सत्यम्। ओं तथ्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्॥

### ॥ श्री गायत्री उपस्थान मन्त्राः ॥

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि। ब्राह्मणेभ्यो ऽ भनुज्ञाता गच्छदेवि यथासुखम्। स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता। आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रजातुं ब्रह्मलोकम्॥



# ॥ श्री गायत्री शाप विमोचनम् ॥

## Shri Gayatri Shapa Vimochana Mantras

As Kali Yuga is characterized by materialistic tendencies and straying far away from Dharma, it is believed that the sages have cast curses on various sacred mantras to become ineffective in Kali Yuga in order to prevent these mantras from being misused. The following mantras seek to remove the curses of Lord Brahma, Sage Vasishta and Sage Vishvamitra on Gayatri Mantram. In Devi Bhagavatam, it is given that the following Shapa Vimochana Mantras should be chanted prior to Gayatri Japam, though this practice is not strictly in vogue. People who want to use the following mantras are advised to consult learned people for proper procedure.

शाप मुक्ता हि गायत्री चतुर्वर्ग फल प्रदा ।
अशाप मुक्ता गायत्री चतुर्वर्ग फलान्तका ॥

ॐ अस्य श्री गायत्री ब्रह्म शाप विमोचन मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । भुक्ति मुक्ति प्रदा ब्रह्म शाप विमोचनी गायत्री शक्तिः देवता । ब्रह्म शाप विमोचनार्थे जपे विनियोगः ॥

ॐ गायत्री ब्रह्मेत्युपासीत यद् रूपं ब्रह्मविदो विदुः ।
तां पश्यन्ति धीराः सुमनसां वाचग्रतः ॥

ॐ वेदान्त नाथाय विद्महे हिरण्यगर्भाय धीमही । तन्नो ब्रह्मा प्रचोदयात् ।
ॐ गायत्री त्वं ब्रह्म शापात् विमुक्ता भव ॥

ॐ अस्य श्री वसिष्ट शाप विमोचन मन्त्रस्य । निग्रह अनुग्रह कर्ता वसिष्ट ऋषिः । विश्वोद्भव गायत्री छन्दः । वसिष्ट अनुग्रहिता गायत्री शक्तिः देवता । वसिष्ट शाप विमोचनार्थे जपे विनियोगः ॥

ॐ सो ऽ हं अर्कमयं ज्योतिरहं शिव आत्म ज्योतिरहं शुक्रः सर्व ज्योतीरसः अस्म्यहं ।

(इति युक्त्वा योनि मुद्रां प्रदर्श्य । गायत्री त्रयं पदित्व ) ।

ॐ देवी गायत्री त्वं वसिष्ट शापात् विमुक्तो भव ॥

# ॥ श्री गायत्री शाप विमोचनम् ॥

ॐ अस्य श्री विश्वामित्र शाप विमोचन मन्त्रस्य। नूतन सृष्टि कर्ता विश्वामित्र ऋषिः। वाग्देहा गायत्री छन्दः। विश्वामित्र अनुग्रहिता गायत्री शक्तिः देवता। विश्वामित्र शाप विमोचनार्थे जपे विनियोगः॥

ॐ गायत्री भजाम्यग्नि मुखीं विश्वगर्भां यदुद्भवाः।
देवाश्चक्रिरे विश्वसृष्टिं तां कल्याणीं इष्टकरीं प्रपद्ये।

यन् मुखान् निसृतो अखिलवेद गर्भः।
शाप युक्ता तु गायत्री सफला न कदाचन ।
शापात् उत्तरीत सा तु मुक्ति भुक्ति फल प्रदा॥

## प्रार्थना॥

ब्रह्मरूपिणी गायत्री दिव्ये सन्ध्ये सरस्वती।
अजरे अमरे चैव ब्रह्मयोने नमो ऽ स्तु ते॥

ब्रह्म शापात् विमुक्ता भव। वसिष्ट शापात् विमुक्ता भव। विश्वामित्र शापात् विमुक्ता भव॥

---

## ॥ इति श्री गायत्री शाप विमोचन मन्त्राः॥



# ॥ श्री गायत्री मन्त्र जप विधानम् ॥

# Sri Gayatri Mantra Japa Vidhanam

The procedure given below for Gayatri Mantra Japam is different from the procedure used in daily Sandhya Vandanam. The following procedure is normally used by Gayatri Upasakas after due initiation. The following Japa is preferably done after Puja for meditating on Gayatri.

## गणापति ध्यानं ॥

आचमनम् ॥

शुक्लाम्बर धरं विष्णुं शशि वर्णं चतुर् भुजम् ।
प्रसन्न वदनं ध्यायेत् सर्व विघ्नोपशान्तये ॥

## संकल्पः ॥

प्राणायामः ॥

ममोपात्त समस्त दुरित क्षय द्वारा श्री गायत्री प्रीत्यर्थम् श्री गायत्री महामन्त्र जपं करिष्ये ॥

## गुरु वन्दनम् ॥

गुरुर् ब्रह्मा गुरुर् विष्णुः गुरुर् देवो महेश्वरः ।
गुरुस् साक्षात् परं ब्रह्म तस्मै श्री गुरवे नमः ॥

## ऋष्यादि न्यासः ॥

अस्य श्री सावित्र्या ऋषिर् विश्वामित्रः । (Touch forehead)
निचृद् गायत्री छन्दः । (Touch mouth/tip of nose)
सविता देवता ॥ (Touch heart )
तत् सवितुर् वरेण्यम् बीजम् । (Touch right shoulder)
धियो यो नः प्रचोदयात् शक्तिः । (Touch left shoulder)
भर्गो देवस्य धीमहि कीलकम् ॥ (Touch abdomen)
श्री गायत्रि प्रसाद सिद्ध्यर्थे जपे विनियोगः ॥
(Fold both hands together and rotate inwards near heart)

## कर न्यासः ॥

**तत् सवितुर् ब्रह्मात्मने अंगुष्ठाभ्यां नमः ।**
(Rub the middle of both thumbs with respective fore finger tips)

**वरेण्यं विष्णवात्मने तर्जनीभ्यां नमः ।**
(Rub the middle of both fore fingers with respective thumb tips)

**भर्गो देवस्य रुद्रात्मने मध्यमाभ्यां नमः ।**
(Rub the middle of both middle fingers with respective thumb tips)

**धीमहि शक्त्यात्मने अनामिकाभ्यां नमः ।**
(Rub the middle of ring fingers with respective thumb tips)

**धियो यो नः कालात्मने कनिष्ठिकाभ्यां नमः**
(Rub the middle of little fingers with respective thumb tips)

**प्रचोदयात् सर्वात्मने कर तल कर पृष्ठाभ्यां नमः ॥**
(Rub both sides of palms with other hand)

## हृदयादि न्यासः ॥

**तत् सवितुर् ब्रह्मात्मने हृदयाय नमः ।**
(Touch heart with fore/middle/ring fingers)

**वरेण्यं विष्णवात्मने शिरसे स्वाहा ।**
(Touch head with middle/ring fingers)

**भर्गो देवस्य रुद्रात्मने शिखायै वषट् ।**
(Touch scalp hear with thumb)

**धीमहि शक्त्यात्मने कवचाय हुं ।**
(Cross hands and touch opposite shoulders with all fingers)

**धियो यो नः कालात्मने नेत्र त्रयाय वौषट् ।**
(Touch the middle of eye brows with fore/middle/ring fingers)

**प्रचोदयात् सर्वात्मने अस्त्राय फट् ॥**
(Tap left palm with right fore finger)

**ॐ भूर्भुवस्सुवरोम् इति दिग् बन्धः ॥**
(Rotate right hand over the head once clock-wise)

## ध्यानम् ॥

मुक्ता विद्रुम हेम नील धवलच् छायैर् मुखैस् त्रीक्षणैः
युक्तां इन्दु निबद्ध रत्न मकुटां तत्त्वार्थ वर्णात्मिकाम् ।
गायत्रीं वरदा ऽ भया ऽ ङ्कुश कशाः शुभ्रं कपालं गुणं ।
शङ्खं चक्रमथा ऽ रविन्द युगलं हस्तैर् वहन्तीं भजे ॥

अक्षः स्रक् कुण्टिका हस्तां शुद्ध स्फटिक निर्मलाम् ।
सर्व विद्यामयीं वन्दे गायत्रीं वेद मातरम् ॥

यो देवः सविता ऽ स्माकं धियो धर्मा ऽ धिगोचराः ।
प्रेरयेत् तस्य यद् भर्गस् तद् वरेण्यं उपास्महे ॥

## पंच पूजा ॥

| | | |
|---|---|---|
| लं | पृथिव्यात्मिकायै | गन्धं समर्पयामि । |
| हं | आकाशात्मिकायै | पुष्पैः पूजयामि । |
| यं | वाय्वात्मिकायै | धूपं आघ्रापयामि । |
| रं | अग्न्यात्मिकायै | दीपं दर्शयामि । |
| वं | अमृतात्मिकायै | अमृतं महा नैवेद्यं निवेदयामि । |
| सं | सर्वात्मिकायै | सर्वोपचार पुजां समर्पयामि ॥ |

## मन्त्र जपम् ॥

ॐ ।
भूर्भुवस्सुवः ।
तत् सवितुर् वरेण्यम् ।
भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥

(The above mantra must be chanted according to Vedic notes, in unison with Shruti and with FIVE pauses as given above. It is claimed that chanting otherwise bears no fruit at all and even attracts sin. So, chanting it a fewer number of times correctly is more preferable than chanting it hundreds of times incorrectly and in haste. Repeat the above mantra as many times as spelt out in the Sankalpa above. Typically it should be in multiples of 108 or a Mala).

## उत्तरांग पूजा ॥

**प्राणायामः ॥**

**हृदयादि न्यासः ॥**
(Repeat as above except the following last line as below)
ॐ भूर्भुवस्सुवरोम् इति दिग् विमोकः ॥
(Rotate right hand over the head once anti-clock-wise)

**ध्यानम् ॥**
(Repeat as above)

**पंच पूजा ॥**
(Repeat as above)

## समर्पणम् ॥

गुह्यादि गुह्य गोप्त्री त्वं गृहाणा ऽ स्मत् कृतं जपम् ।
सिद्धिर् भवतु मे देवी त्वत् प्रसादान् मयि स्थिरा ॥

उत्तमे शिखरे देवी भूम्यां पर्वत मूर्धनि ।
ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवी यथा सुखम् ॥

---

## ॥ इति गायत्री मन्त्र जप विधानम् सम्पूर्णम् ॥



# ॥ श्री गायत्री अष्टोत्तर शतनाम स्तोत्रम् (श्री वसिष्ट ) ॥
## Sri Gayatri Ashtottaram (1) – Sri Vasishta

Chanting the following Ashtottara Shata Namas (108 Names) of Gayatri thrice a day with devotion is said to bestow Mantra Siddhi, apart from granting all of one's wishes.

श्री गायत्री जगन्माता परब्रह्म स्वरूपिणी ।
परमार्थ प्रदा जप्या ब्रह्मतेजो विवर्धिनी ॥ १ ॥

ब्रह्मास्त्र रूपिणी भव्या त्रिकाल ध्येय रूपिणी ।
त्रिमूर्ति रूपा सर्वज्ञा वेदमाता मनोन्मणी ॥ २ ॥

बालिका तरुणी वृद्धा सूर्य मण्डल वासिनी ।
मन्देह दानव ध्वम्स कारिणी सर्व कारणा ॥ ३ ॥

हंसारूढा वृषारूढा गरुडा ऽ रोहिणी शुभा ।
षट् कुक्षिस् त्रिपदा शुद्धा पंचशीर्षा त्रिलोचना ॥ ४ ॥

त्रिवेद रूपा त्रिविदा त्रिवर्ग फल दायिनी ।
दश हस्ता चन्द्र वर्णा विश्वामित्र वरप्रदा ॥ ५ ॥

दशायुध धरा नित्या सन्तुष्टा ब्रह्म पूजिता ।
आदिशक्तिर् महाविद्या सुषुम्नाख्या सरस्वती ॥ ६ ॥

चतुर् विंशत् यक्षराढ्या सावित्री सत्य वत्सला ।
सन्ध्या रात्रिः प्रभाताख्या साङ्ख्यायन कुलोद्भवा ॥ ७ ॥

सर्वेश्वरी सर्व विद्या सर्व मन्त्रादिर् अव्यया ।
शुद्ध वस्त्रा शुद्ध विद्या शुक्ल माल्यानुलेपना ॥ ८ ॥

सुर सिन्धु समा सौम्या ब्रह्मलोक निवासिनी ।
प्रणव प्रतिपात्यार्था प्रणतोत्तरण क्षमा ॥ ९ ॥

जलाञ्जलि सुसन्तुष्टा जल गर्भा जल प्रिया ।
स्वाहा स्वता सुधा संस्था श्रौषट् वौषट् वषट् क्रिया ॥ १० ॥

सुरभिः षोडश कला मुनि बृन्द निषेविता ।
यज्ञ प्रिया यज्ञ मूर्तिः सृक् सृवाज्य स्वरूपिणी ॥ ११ ॥

अक्षमाला धरा चा ऽ क्ष माला संस्था ऽ क्षराकृतिः ।
मधुच्छन्द ऋषिप्रीता स्वच्छन्दा छन्दसां निधिः ॥ १२ ॥

अङ्ग्गुळी पर्व संस्थाना चतुर् विंशति मुद्रिका ।
ब्रह्म मूर्ती रुद्र शिखा सहस्त्र परमाम्बिका ॥ १३ ॥

विष्णु हृद्का चा ऽ ग्नि मुखी शत मध्या दशावरा ।
सहस्त्र दल पद्मस्था हंस रूपा निरञ्जना ॥ १४ ॥

चराचरस्था चतुरा सूर्य कोटि सम प्रभा ।
पंच वर्ण मुखी दात्री चन्द्र कोटि शुचिस्मिता ॥ १५ ॥

महामाया विचित्रांगी मायाबीज निवासिनी ।
सर्व यन्त्रा ऽ त्मिका सर्व तन्त्र रूपा जगत्तिता ॥ १६ ॥

मर्यादा पालिका मान्या महामन्त्र फल प्रदा ।

**फलश्रृतिः ॥**

इत्यष्टोत्तर नामानि गायत्र्याः प्रोक्तवान् मुनिः ॥ १७ ॥

एतद् अष्टोत्तर शतं नित्यं भक्तियुतः शुचिः ।
त्रिसन्ध्यं यः पठेत् सर्व मन्त्र सिद्धिं अवाप्नुयात् ॥ १८ ॥

---

**॥ इति श्री वसिष्ट प्रोक्त गायत्री अष्टोत्तर शत नाम स्तोत्रम् सम्पूर्णम् ॥**



# ॥ श्री गायत्री अष्टोत्तर शत नामावलि (श्री वसिष्ट ) ॥
## Sri Gayatri Ashtottara Namavali (1) – Sri Vasishta

ॐ श्री गायत्र्यै नमः
ॐ जगन्मात्रे नमः
ॐ परब्रह्म स्वरूपिण्यै नमः
ॐ परमार्थ प्रदायै नमः
ॐ जप्यायै नमः
ॐ ब्रह्मतेजो विवर्धिन्यै नमः
ॐ ब्रह्मास्त्र रूपिण्यै नमः
ॐ भव्यायै नमः
ॐ त्रिकाल ध्येय रूपिण्यै नमः
ॐ त्रिमूर्ति रूपायै नमः
ॐ सर्वज्ञायै नमः
ॐ वेदमात्रे नमः
ॐ मनोन्मण्यै नमः
ॐ बालिकायै नमः
ॐ तरुण्यै नमः
ॐ वृद्धायै नमः
ॐ सूर्य मण्डल वासिन्यै नमः
ॐ मन्देह दानव ध्वम्स कारिण्यै नमः
ॐ सर्व कारणायै नमः
ॐ हंसारूढायै नमः
ॐ वृषारूढायै नमः
ॐ गरुडा ऽ रोहिण्यै नमः
ॐ शुभायै नमः
ॐ षट् कुक्षिण्यै नमः
ॐ त्रिपदायै नमः
ॐ शुद्धायै नमः
ॐ पंचशीर्षायै नमः
ॐ त्रिलोचनायै नमः
ॐ त्रिवेद रूपायै नमः
ॐ त्रिविदायै नमः
ॐ त्रिवर्ग फल दायिन्यै नमः
ॐ दश हस्तायै नमः
ॐ चन्द्र वर्णायै नमः
ॐ विश्वामित्र वरप्रदायै नमः
ॐ दशायुध धरायै नमः
ॐ नित्यायै नमः
ॐ सन्तुष्टायै नमः
ॐ ब्रह्म पूजितायै नमः
ॐ आदिशक्त्यै नमः
ॐ महाविद्यायै नमः
ॐ सुषुम्नाख्यायै नमः
ॐ सरस्वत्यै नमः
ॐ चतुर् विंशत्यक्षराढ्यायै नमः
ॐ सावित्र्यै नमः
ॐ सत्य वत्सलायै नमः
ॐ सन्ध्यायै नमः
ॐ रात्र्यै नमः
ॐ प्रभाताख्यायै नमः
ॐ साङ्ख्यायन कुलोद्भवायै नमः
ॐ सर्वेश्वर्यै नमः
ॐ सर्व विद्यायै नमः
ॐ सर्व मन्त्रादये नमः
ॐ अव्ययायै नमः
ॐ शुद्ध वस्त्रायै नमः
ॐ शुद्ध विद्यायै नमः
ॐ शुक्ल माल्यानुलेपनायै नमः
ॐ सुर सिन्धु समायै नमः
ॐ सौम्यायै नमः
ॐ ब्रह्मलोक निवासिन्यै नमः
ॐ प्रणव प्रतिपात्याथायै नमः
ॐ प्रणतोत्तरण क्षमायै नमः
ॐ जलाञ्जलि सुसन्तुष्टायै नमः
ॐ जल गर्भायै नमः
ॐ जल प्रियायै नमः

# ॥ श्री गायत्री अष्टोत्तर शत नामावलि (श्री वसिष्ट ) ॥

ॐ स्वाहायै नमः
ॐ स्वतायै नमः
ॐ सुधा संस्थायै नमः
ॐ श्रौषट् वौषट् वषट् क्रियायै नमः
ॐ सुरभ्यै नमः
ॐ षोडश कलायै नमः
ॐ मुनि बृन्द निषेवितायै नमः
ॐ यज्ञ प्रियायै नमः
ॐ यज्ञ मूर्त्यै नमः
ॐ सृक् सृवाज्य स्वरूपिण्यै नमः
ॐ अक्षमाला धरायै नमः
ॐ अक्ष माला संस्थायै नमः
ॐ अक्षराकृत्यै नमः
ॐ मधुच्छन्दसे नमः
ॐ ऋषिप्रीतायै नमः
ॐ स्वच्छन्दायै नमः
ॐ छन्दसां निधये नमः
ॐ अङ्गुळी पर्व संस्थानायै नमः
ॐ चतुर् विंशति मुद्रिकायै नमः
ॐ ब्रह्म मूर्त्यै नमः
ॐ रुद्र शिखायै नमः
ॐ सहस्त्र परमाम्बिकायै नमः

ॐ विष्णु हृद्कायै नमः
ॐ अग्नि मुख्यै नमः
ॐ शत मध्यायै नमः
ॐ दशावरायै नमः
ॐ सहस्त्र दल पद्मस्थायै नमः
ॐ हंस रूपायै नमः
ॐ निरञ्जनायै नमः
ॐ चराचरस्थायै नमः
ॐ चतुरायै नमः
ॐ सूर्य कोटि सम प्रभायै नमः
ॐ पंच वर्ण मुख्यै नमः
ॐ दात्र्यै नमः
ॐ चन्द्र कोटि शुचिस्मितायै नमः
ॐ महामायायै नमः
ॐ विचित्रांग्यै नमः
ॐ मायाबीज निवासिन्यै नमः
ॐ सर्व यन्त्रा ऽ त्मिकायै नमः
ॐ सर्व तन्त्र रूपायै नमः
ॐ जगत्तितायै नमः
ॐ मर्यादा पालिकायै नमः
ॐ मान्यायै नमः
ॐ महामन्त्र फल प्रदायै नमः ।

**॥ इति श्री वसिष्ट प्रोक्त गायत्री अष्टोत्तर शत नामवळी सम्पूर्णम् ॥**



# ॥ श्री गायत्री अष्टोत्तर शतनाम स्तोत्रम् ( रुद्र यामळम् ) ॥

## Shri Gayatri Ashtottaram (2) – Rudra Yamalam

This is another Ashtottara Shata Nama stotram (108 Names) on Sri. Gayatri. The Phalashruti at the end of the stotram declares that chanting this stotram grants one all wishes, destroys all sins including Brahma hatya, grants health and wealth and ultimately gives Moksha (salvation).

तरुणादित्य संकाशा सहस्र नयनोज्ज्वला ।
विचित्र माल्याभरणा तुहिनाचल वासिनी ॥ १ ॥

वरदा ऽ भय हस्ताब्जा रेवातीर निवासिनी ।
प्रणित्यय विशेषज्ञा यन्त्राकृत विराजिता ॥ २ ॥

भद्रपाद प्रिया चैव गोविन्द पथ गामिनी ।
देवर्षि गण सन्तुष्टा वनमाला विभूषिता ॥ ३ ॥

स्यन्दनोत्तम संस्था च धीरजीमूत निस्वना ।
मत्त मातंग गमना हिरण्य कमलासना ॥ ४ ॥

धीन जनोद्धार निरता योगिनी योग धारिणी ।
नटनात्यैक निरता प्रणवाद्यक्षरात्मिका ॥ ५ ॥

घोराचारा क्रियासक्ता धारिद्र्य च्छेद कारिणि ।
यादवेन्द्र कुलोद्भूता तुरीय पथ गामिनी ॥ ६ ॥

गायत्री गोमती गंगा गौतमी गरुडासना ।
गेयगानप्रिया गौरी गोविन्द पद पूजिता ॥ ७ ॥

गन्धर्व नगरागारा गौर वर्णा गणेश्वरी ।
गुणाश्रया गुणवती गह्वरी गणपूजिता ॥ ८ ॥

गुणत्रय समायुक्ता गुणत्रय विवर्जिता ।
गुहावासा गुणाधारा गुह्या गन्धर्व रूपिणी ॥ ९ ॥

गार्ग्यप्रिया गुरुपदा गुह्य लिङ्गाङ्ग धारिणी ।
सावित्री सूर्य तनया सुषुम्ना नाडि भेदिनी ॥ १० ॥

सुप्रकाशा सुखासीना सुमतिस् सुरपूजिता ।
सुषुप्त्यवस्था सुदती सुन्दरी सागराम्बरा ॥ ११ ॥

सुधांशु बिम्ब वदना सुस्तनी सुविलोचना ।
सीता सत्वाश्रया सन्ध्या सुफला सुविधायिनी ॥ १२ ॥

सुभ्रूस् सुवासा सुश्रोणी संसारार्णव तारिणी ।
सामगान प्रिया साध्वी सर्वाभरण भूषिता ॥ १३ ॥

वैष्णवी विमलाकारा माहेन्द्री मन्त्र रूपिणी ।
महलक्ष्मीर् महासिद्धिर् महामाया महेश्वरी ॥ १४ ॥

मोहिनी मदनाकारा मधुसूदन चोदिता ।
मीनाक्षी मदुरावासा नगेन्द्र तनया उमा ॥ १५ ॥

त्रिविक्रम पदा क्रान्ता त्रिस्वर्गा त्रिविलोचना ।
सूर्य मण्डल मध्यस्था चन्द्र मण्डल संस्थिता ॥ १६ ॥

वह्नि मण्डल मध्यस्था वायु मण्डल संस्थिता ।
व्योम मण्डल मध्यस्था चक्रिणी चक्र रूपिणी ॥ १७ ॥

कालचक्र वितानस्ता चन्द्र मण्डल दर्पणा ।
ज्योत्स्नातपा सुलिप्तांगी महामारुत वीजिता ॥ १८ ॥

सर्व मन्त्राश्रया धेनुः पापघ्नी परमेश्वरी ।
नमस्ते ऽ स्तु महालक्ष्मी महासंपत्ति दायिनी ॥ १९ ॥

नमस्तुन्तु करुणामूर्ती नमस्ते भक्त वत्सले ।
गायत्र्या प्रजपेद् यस्तु नाम्नां अष्टोत्तरं शतम् ॥ २० ॥

**फलश्रुतिः ॥**

तस्य पुण्य फलं सक्तुं ब्रह्मणा ऽ पि न शक्यते ।
प्रातः काले च मध्याह्ना सायह्नावा द्विजोत्तम ॥ २१ ॥

ये पठन्तीह लोकेस्मिन् सर्वान् कामान् अवाप्नुयात् ।
पठनाद् एव गायत्री नाम्नां अष्टोत्तरं शतम् ॥ २२ ॥

ब्रह्म हत्यादि पापेभ्यो मुच्यते नात्र संशयः ।
दिने दिने पठेद् यस्तु गायत्री स्तवं उत्तमम् ॥ २३ ॥

स नरो मोक्षसाप्नोति पुनरावृत्ति विवर्जितम् ।
पुत्रप्रदं अपुत्राणां दरिद्राणां धनप्रदम् ॥ २४ ॥
रोगीणां रोग शमनं सर्वैश्वर्य प्रदायकम् ।
बहुनात्र किमुकैन स्तोत्रं शीघ्रं फलप्रदम् ॥ २५ ॥

**॥ इति रुद्रयामळे श्री गायत्री अष्टोत्तर शत नाम स्तोत्रम् संपुर्णम् ॥**



# ॥ श्री गायत्री अष्टोत्तर शत नामावलि ( रुद्र यामळम् ) ॥

## Sri Gayatri Ashtottara Namavali (2) – Rudra Yamalam

ॐ तरुणादित्य संकाशायै नमः
ॐ सहस्त्र नयनोज्ज्वलायै नमः
ॐ विचित्र माल्याभरणायै नमः
ॐ तुहिनाचल वासिन्यै नमः
ॐ वरदा ऽ भय हस्ताब्जायै नमः
ॐ रेवातीर निवासिन्यै नमः
ॐ प्रणित्यय विशेषज्ञायै नमः
ॐ यन्त्राकृत विराजितायै नमः
ॐ भद्रपाद प्रियायै नमः
ॐ गोविन्द पथ गामिन्यै नमः
ॐ देवर्षी गण सन्तुष्टायै नमः
ॐ वनमाला विभूषितायै नमः
ॐ स्यन्दनोत्तम संस्थायै नमः
ॐ धीरजीमूत निस्वनायै नमः
ॐ मत्त मातंग गमनायै नमः
ॐ हिरण्य कमलासनायै नमः
ॐ धीन् जनोद्धार निरतायै नमः
ॐ योगिन्यै नमः
ॐ योग धारिणै नमः
ॐ नटनात्यैक निरतायै नमः
ॐ प्रणवाद्यक्षरात्मिकायै नमः
ॐ घोरा चार क्रिया सक्तायै नमः
ॐ दारिद्र्यच्छेद कारिण्यै नमः
ॐ यादवेन्द्र कुलोद्भूतायै नमः
ॐ तुरीय पथ गामिन्यै नमः
ॐ गायत्रै नमः
ॐ गोमत्यै नमः
ॐ गंगायै नमः
ॐ गौतम्यै नमः
ॐ गरुडासनायै नमः
ॐ गेय गान प्रियायै नमः
ॐ गौर्यै नमः
ॐ गोविन्द पद पूजितायै नमः
ॐ गन्धर्व नगरागारायै नमः
ॐ गौर वर्णायै नमः
ॐ गणेश्वर्यै नमः
ॐ गुणाश्रयायै नमः
ॐ गुणवत्यै नमः
ॐ गह्वरै नमः
ॐ गण पूजितायै नमः
ॐ गुणत्रय समायुक्तायै नमः
ॐ गुणत्रय विवर्जितायै नमः
ॐ गुहावासायै नमः
ॐ गुणाधारायै नमः
ॐ गुह्यायै नमः
ॐ गन्धर्व रूपिण्यै नमः
ॐ गार्ग्य प्रियायै नमः
ॐ गुरु पदायै नमः
ॐ गुह्य लिङ्गाङ्ग धारिण्यै नमः
ॐ सावित्र्यै नमः
ॐ सूर्य तनयायै नमः
ॐ सुषुम्ना नाडि भेदिन्यै नमः
ॐ सुप्रकाशायै नमः
ॐ सुखासीनायै नमः
ॐ सुमत्यै नमः
ॐ सुर पूजितायै नमः
ॐ सुषुप्त्यवस्थायै नमः
ॐ सुदत्यै नमः
ॐ सुन्दर्यै नमः
ॐ सागराम्बरायै नमः
ॐ सुधांशु बिम्ब वदनायै नमः
ॐ सुस्तन्यै नमः

## ॥ श्री गायत्री अष्टोत्तर शत नामावलि ( रुद्र यामळम् ) ॥

ॐ सुविलोचनायै नमः
ॐ सीतायै नमः
ॐ सत्वाश्रयायै नमः
ॐ सन्ध्यायै नमः
ॐ सुफलायै नमः
ॐ सुविधायिन्यै नमः
ॐ सुभ्रुवे नमः
ॐ सुवासायै नमः
ॐ सुश्रोणयै नमः
ॐ संसारार्णव तारिण्यै नमः
ॐ सामगान प्रियायै नमः
ॐ साध्व्यै नमः
ॐ सर्वाभरण भूषितायै नमः
ॐ वैष्णव्यै नमः
ॐ विमलाकारायै नमः
ॐ माहेन्द्र्यै नमः
ॐ मन्त्र रूपिण्यै नमः
ॐ महालक्ष्म्यै नमः
ॐ महासिद्धियै नमः
ॐ महामायायै नमः
ॐ महेश्वर्यै नमः
ॐ मोहिन्यै नमः
ॐ मदनाकारायै नमः
ॐ मधुसूदन चोदितायै नमः
ॐ मीनाक्ष्यै नमः
ॐ मदुरावासायै नमः
ॐ नगेन्द्र तनयायै नमः
ॐ उमायै नमः
ॐ त्रिविक्रम पदा क्रान्तायै नमः
ॐ त्रिस्वगायै नमः
ॐ त्रिविलोचनायै नमः
ॐ सूर्य मण्डल मध्यस्थायै नमः
ॐ चन्द्र मण्डल संस्थितायै नमः
ॐ वह्नि मण्डल मध्यस्थायै नमः
ॐ वायु मण्डल संस्थितायै नमः
ॐ व्योम मण्डल मध्यस्थायै नमः
ॐ चक्रिण्यै नमः
ॐ चक्र रूपिण्यै नमः
ॐ कालचक्र वितानस्तायै नमः
ॐ चन्द्र मण्डल दर्पणायै नमः
ॐ ज्योत्स्नातपायै नमः
ॐ सुलिप्तांग्यै नमः
ॐ महामारुत वीजितायै नमः
ॐ सर्व मन्त्राश्रयायै नमः
ॐ धेनवे नमः
ॐ पापघ्न्यै नमः
ॐ परमेश्वर्यै नमः

॥ इति रुद्रयामळे श्री गायत्री अष्टोत्तर शत नाम स्तोत्रम् संपुर्णम् ॥



# ॥ श्री गायत्री सहस्रनाम स्तोत्रम् (देवी भागवतम्) ॥

## Sri Gayatri Sahasranama Stotram (1) – Devi Bhagavatam

The following Sahasra Nama (1008 Names) Stotram of Gayatri is taken from Srimad Devi Bhagavatam. Lord Narayana declares that this Sahasranama was recited at the start of creation of the universe and is the most sacred of all. Chanting the stotram will bestow wealth, children, health and ultimately salvation while destroying all the sins. This Sahasranama, though can be chanted any time, is recommended for chanting on an Ashtami (8th day from New/Full moon day) for accruing special benefits.

नारद उवाच ।

भगवन् सर्व धर्मज्ञ सर्व शास्त्र विशारद ।
श्रुति स्मृति पुराणानां रहस्यं त्वन् मुखाच्छ्रुतम् ॥ १ ॥

सर्व पाप हरं देव येन विद्या प्रवर्तते ।
केन वा ब्रह्म विज्ञानं किं नु वा मोक्ष साधनम् ॥ २ ॥

ब्राह्मणानां गतिः केन केन वा मृत्यु नाशनम् ।
ऐहिकामुष्मिक फलं केन वा पद्मलोचन ॥ ३ ॥

वक्तुमर्हस् यशेषेण सर्वे निखिलमादितः ।

श्रीनारायण उवाच ।

साधु साधु महाप्राज्ञ संयक् पृष्टं त्वया ऽ नघ ॥ ४ ॥

श्रृणु वक्ष्यामि यत्नेन गायत्र्यष्ट सहस्रकम् ।
नाम्नां शुभानां दिव्यानां सर्व पाप विनाशनम् ॥ ५ ॥

सृष्ट्यादौ यद् भगवता पूर्वं प्रोक्तं ब्रवीमि ते ।
अष्टोत्तर सहस्रस्य ऋषिर् ब्रह्मा प्रकीर्तितः ॥ ६ ॥

छन्दो ऽ नुष्टुप् तथा देवी गायत्री देवता स्मृता ।
हलो बीजानि तस्यैव स्वराः शक्तय ईरिताः ॥ ७ ॥

अंग न्यास कर न्यासा वुच्येते मातृकाक्षरैः ।
अथ ध्यानं प्रवक्ष्यामि साधकानां हिताय वै ॥ ८ ॥

## ॥ विनियोगः ॥

अस्य श्री गायत्री सहस्रनाम स्त्रोत्र महामन्त्रस्य। ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। श्री गायत्री देवी देवता। श्री गायत्री प्रसाद द्वारा मोक्षार्थे जपे विनियोगः ॥

## ॥अंग न्यासः ॥

| | |
|---|---|
| अं कं खं गं घं ङं आं | अंगुष्ठाभ्यां नमः। |
| इं चं छं जं झं ञं ईं | तर्जनीभ्यां नमः। |
| उं टं ठं डं ढं णं ऊं | मध्यमाभ्यां नमः। |
| एं तं थं दं धं नं ऐं | अनामिकाभ्यां नमः। |
| ओं पं फं बं भं मं औं | कनिष्ठिकाभ्यां नमः। |
| अं यं रं लं वं शं षं सं हं क्षं अः | करतल कर पृष्ठाभ्यां नमः ॥ |

## ॥ हृदयदि न्यासः ॥

| | |
|---|---|
| अं कं खं गं घं ङं आं | हृदयाय नमः। |
| इं चं छं जं झं ञं ईं | शिरसे स्वाहा। |
| उं टं ठं डं ढं णं ऊं | शिखायै वषट्। |
| एं तं थं दं धं नं ऐं | कवचाय हुम्। |
| ओं पं फं बं भं मं औं | नेत्र त्रयाय वौषट् । |
| अं यं रं लं वं शं षं सं हं क्षं अः | अस्त्राय फट्। |
| ॐ भूर्भुवसुवरोम् | इति दिग् बन्धः ॥ |

## ध्यानम् ॥

**रक्त श्वेत हिरण्य नील धवलैर् युक्तां त्रिनेत्रोज्ज्वलां**
**रक्तां रक्त नवस्रजं मणि गणैर् युक्तां कुमारीं इमाम्।**
**गायत्रीं कमलासनां कर तल व्यानद्ध कुण्डाम्बुजां**
**पद्माक्षीं च वरस्रजं च दधतीं हंसाधिरूढां भजे ॥ ९॥**

## श्री गायत्री सहस्रनाम स्तोत्रं ॥

अचिन्त्य लक्षणा ऽ व्यक्ता ऽ प्यर्ध मातृ महेश्वरी ।
अमृतार्णव मध्यस्था ऽ प्यजिता चा ऽ पराजिता ॥ १० ॥

अणिमादि गुणाधारा ऽ प्यर्क मण्डल संस्थिता ।
अजरा ऽ जा ऽ पराधर्मा अक्षसूत्रधरा ऽ धरा ॥ ११ ॥

अकारादि क्षकारान्ता ऽ प्यरि षड्वर्ग भेदिनी ।
अंजनादि प्रतीकाशा ऽ प्यंजनाद्रि निवासिनी ॥ १२ ॥

अदितिश् चा ऽ जपाविद्या ऽ प्यरविन्द निभेक्षणा ।
अन्तर्बहिः स्थिता ऽ विद्या ध्वंसिनी चा ऽ न्तरात्मिका ॥ १३ ॥

अजा चा ऽ जमुखा वासा ऽ प्यरविन्द निभानना ।
अर्ध मात्रा ऽ र्थ दानज्ञा ऽ प्यरि मण्डल मर्दिनी ॥ १४ ॥

असुरघ्नी ह्यमावास्या ऽ प्यलक्ष्मीघ्नी अन्त्यजार्चिता ।
आदिलक्ष्मीश् चा ऽ दिशक्तिर् आकृतिश् चा ऽ यतानना ॥ १५ ॥

आदित्य पदवी चारा ऽ प्यादित्य परिसेविता ।
आचार्या ऽऽ वर्तना ऽऽ चारा ऽ प्यादि मूर्ति निवासिनी ॥ १६ ॥

आग्नेयी चा ऽ मरी चा ऽऽ द्या चा ऽऽ राध्या चा ऽऽ सन स्थिता ।
आधार निलया ऽ धारा चा ऽ काशान्त निवासिनी ॥ १७ ॥

आद्याक्षर समायुक्ता चा ऽ न्तराकाश रूपिणी ।
आदित्य मण्डल गता चा ऽ न्तरध्वान्त नाशिनी ॥ १८ ॥

इन्दिरा चेष्टदा चेष्टा चेन्दीवर निभेक्षणा ।
इरावती चेन्द्रपदा चेन्द्राणी चेन्दु रूपिणी ॥ १९ ॥

इक्षु कोदण्ड संयुक्ता चेषु संधान कारिणी ।
इन्द्र नील समाकारा चेडा पिङ्गल रूपिणी ॥ २० ॥

इन्द्राक्षी चेश्वरी देवी चेहात्रय विवर्जिता ।
उमा चोषा ह्युडु निभा उर्वारुक फलानना ॥ २१ ॥

उडु प्रभा चोडुमती ह्युडुपा ह्युडु मध्यगा।
ऊर्ध्वा चाप्यूर्ध्व केशी चाप्यूर्ध्वा ऽ धोगति भेदिनी ॥ २२ ॥

ऊर्ध्व बाहु प्रिया चोर्मिमाला वाग्ग्रन्थ दायिनी।
ऋतं च ऋषिर् ऋतुमती ऋषि देव नमस्कृता ॥ २३ ॥

ऋग्वेदा ऋणहर्त्री च ऋषि मण्डल चारिणी।
ऋद्धिदा ऋजु मार्गस्था ऋजु धर्मा ऋतु प्रदा ॥ २४ ॥

ऋग्वेद निलया ऋज्वी लुप्त धर्म प्रवर्तिनी।
लूतारि वर सम्भूता लूतादि विषहारिणी ॥ २५ ॥

एकाक्षरा चैकमात्रा चैका चैकैकनिष्ठिता।
ऐन्द्री ह्यैरावता ऽ रूढा चैहिकामुष्मिक प्रदा ॥ २६ ॥

ओंकारा ह्योषधी चोता चोतप्रोतनिवासिनी।
और्वा ह्यौषध सम्पन्ना औपासन फलप्रदा ॥ २७ ॥

अण्ड मध्य स्थिता देवी चा ऽ अःकार मनुरूपिणी।
कात्यायनी कालरात्रिः कामाक्षी कामसुन्दरी ॥ २८ ॥

कमला कामिनी कान्ता कामदा कालकण्ठिनी।
करिकुंभ स्तनभरा करवीर सुवासिनी ॥ २९ ॥

कल्याणी कुण्डलवती कुरुक्षेत्र निवासिनी।
कुरुविन्द दलाकारा कुण्डली कुमुदालया ॥ ३० ॥

कालजिह्वा करालास्या कालिका काल रूपिणी।
कमनीय गुणा कान्तिः कलाधारा कुमुद्वती ॥ ३१ ॥

कौशिकी कमलाकारा कामचार प्रभञ्जिनी।
कौमारी करुणापाङ्गी ककुबन्ता करिप्रिया ॥ ३२ ॥

केसरी केशवनुता कदम्ब कुसुम प्रिया।
कालिन्दा कालिका काञ्ची कलशोद्भव संस्तुता ॥ ३३ ॥

काममाता क्रतुमती कामरूपा कृपावती ।
कुमारी कुण्डनिलया किराती कीरवाहना ॥ ३४ ॥

कैकेयी कोकिलालापा केतकी कुसुमप्रिया ।
कमण्डलुधरा काली कर्म निर्मूल कारिणी ॥ ३५ ॥

कलहंसगतिः कक्षा कृतकौतुक मङ्गला ।
कस्तूरी तिलका कम्रा करीन्द्र गमना कुहुः ॥ ३६ ॥

कर्पूर लेपना कृष्णा कपिला कुहराश्रया ।
कूटस्था कुधरा कम्रा कुक्षिस्था ऽ खिल विष्टपा ॥ ३७ ॥

खड्ग खेट करा खर्वा खेचरी खग वाहना ।
खट्वाङ्ग धारिणी ख्याता खगराजोपरिस्थिता ॥ ३८ ॥

खलघ्नी खण्डितजरा खण्डाख्यान प्रदायिनी ।
खण्डेन्दु तिलका गङ्गा गणेश गुह पूजिता ॥ ३९ ॥

गायत्री गोमती गीता गान्धारी गानलोलुपा ।
गौतमी गामिनी गाधा गन्धर्वा ऽ प्सर सेविता ॥ ४० ॥

गोविन्द चरणाक्रान्ता गुणत्रय विभाजिता ।
गान्धर्वी गह्वरी गोत्रा गिरीशा गहना गमी ॥ ४१ ॥

गुहावासा गुणवती गुरु पाप प्रणाशिनी ।
गुर्वी गुणवती गुह्या गोप्तव्या गुण दायिनी ॥ ४२ ॥

गिरिजा गुह्य मातङ्गी गरुडध्वज वल्लभा ।
गर्वा ऽ पहारिणी गोदा गोकुलस्था गदाधरा ॥ ४३ ॥

गोकर्ण निलया सक्ता गुह्य मण्डल वर्तिनी ।
धर्मदा धनदा घण्टा घोर दानव मर्दिनी ॥ ४४ ॥

घृणि मन्त्र मयी घोषा घन संपात दायिनी ।
घण्टारव प्रिया घ्राणा घृणि संतुष्ट कारिणी ॥ ४५ ॥

घनारि मण्डला घूर्णा घृताची घनवेगिनी ।
ज्ञान धातु मयी चर्चा चर्चिता चारुहासिनी ॥ ४६ ॥

चटुला चण्डिका चित्रा चित्रमाल्य विभूषिता ।
चतुर्भुजा चारुदन्ता चातुरी चरितप्रदा ॥ ४७ ॥

चूलिका चित्र वस्त्रान्ता चन्द्रमः कर्ण कुण्डला ।
चन्द्रहासा चारुदात्री चकोरी चन्द्रहासिनी ॥ ४८ ॥

चन्द्रिका चन्द्रधात्री च चौरी चौरा च चण्डिका ।
चञ्चद् वाग्वादिनी चन्द्र चूडा चोर विनाशिनी ॥ ४९ ॥

चारु चन्दन लिप्ताङ्गी चञ्चच् चामर वीजिता ।
चारुमध्या चारुगतिश् चन्दिला चन्द्र रूपिणी ॥ ५० ॥

चारु होम प्रिया चार्वा चरिता चक्रबाहुका ।
चन्द्र मण्डल मध्यस्था चन्द्र मण्डल दर्पणा ॥ ५१ ॥

चक्रवाक स्तनी चेष्टा चित्रा चारु विलासिनी ।
चित् स्वरूपा चन्द्रवती चन्द्रमाश् चन्दन प्रिया ॥ ५२ ॥

चोदयित्री चिरप्रज्ञा चातका चारुहेतुकी ।
छत्रयाता छत्रधरा छाया छन्दः परिच्छदा ॥ ५३ ॥

छायादेवी छिद्रनखा छन्नेन्द्रिय विसर्पिणी ।
छन्दो ऽ नुष्टुप् प्रतिष्ठान्ता छिद्रोपद्रव भेदिनी ॥ ५४ ॥

छेदा छत्रेश्वरी छिन्ना छुरिका छेदनप्रिया ।
जननी जन्मरहिता जातवेदा जगन्मयी ॥ ५५ ॥

जाह्नवी जटिला जेत्री जरामरण वर्जिता ।
जम्बू द्वीप वती ज्वाला जयन्ती जलशालिनी ॥ ५६ ॥

जितेन्द्रिया जितक्रोधा जितामित्रा जगत् प्रिया ।
जातरूप मयी जिह्वा जानकी जगती जरा ॥ ५७ ॥

जनित्री जह्नु तनया जगत्त्रय हितैषिणी ।
ज्वालामुखी जपवती ज्वलघ्नी जितविष्टपा ॥ ५८ ॥

जिताक्रान्त मयी ज्वाला जाग्रती ज्वर देवता ।
ज्वलन्ती जलदा ज्येष्ठा ज्याघोषास्फोट दिङ्मुखी ॥ ५९ ॥

जम्भिनी जृम्भणा जृम्भा ज्वलन् माणिक्य कुण्डला ।
झिंझिका झण निर्घोषा झंझा मारुत वेगिनी ॥ ६० ॥

झल्लरी वाद्य कुशला ञरूपा ञभुजा स्मृता ।
टङ्क बाण समायुक्ता टङ्किनी टङ्क भेदिनी ॥ ६१ ॥

टङ्की गण कृता घोषा टङ्कनीय महोरसा ।
टङ्कार कारिणी देवी ठठ शब्द निनादिनी ॥ ६२ ॥

डामरी डाकिनी डिम्भा डुण्डुमारैक निर्जिता ।
डामरी तन्त्र मार्गस्था डमड् डमरु नादिनी ॥ ६३ ॥

डिण्डीरवसहा डिम्भ लसत्क्रीडा परायणा ।
ढुण्ढि विघ्नेश जननी ढक्का हस्ता ढिलिव्रजा ॥ ६४ ॥

नित्यज्ञाना निरुपमा निर्गुणा नर्मदा नदी ।
त्रिगुणा त्रिपदा तन्त्री तुलसी तरुणा तरुः ॥ ६५ ॥

त्रिविक्रम पदा क्रान्ता तुरीय पद गामिनी ।
तरुणादित्य संकाशा तामसी तुहिना तुरा ॥ ६६ ॥

त्रिकाल ज्ञान सम्पन्ना त्रिवली च त्रिलोचना ।
त्रिशक्तिस् त्रिपुरा तुङ्गा तुरङ्ग वदना तथा ॥ ६७ ॥

तिमिङ्गिला तीव्रा त्रिस्रोता तामसादिनी ।
तन्त्र मन्त्र विशेषज्ञा तनु मध्या त्रिविष्टपा ॥ ६८ ॥

त्रिसन्ध्या त्रिस्तनी तोषा संस्था ताल प्रतापिनी ।
ताटङ्किनी तुषाराभा तुहिनाचल वासिनी ॥ ६९ ॥

तन्तुजाल समायुक्ता तार हारावलि प्रिया ।
तिल होम प्रिया तीर्था तमाल कुसुमाकृतिः ॥ ७० ॥

तारका त्रियुता तन्वी त्रिशङ्कु परिवारिता ।
तलोदरी तिलाभूषा ताटङ्कप्रिय वाहिनी ॥ ७१ ॥

त्रिजटा तित्तिरी तृष्णा त्रिविधा तरुणाकृतिः ।
तप्त काञ्चन संकाशा तप्त काञ्चन भूषणा ॥ ७२ ॥

त्रैयम्बका त्रिवर्गा च त्रिकाल ज्ञान दायिनी ।
तर्पणा तृप्तिदा तृप्ता तामसी तुम्बुरु स्तुता ॥ ७३ ॥

तार्क्ष्यस्था त्रिगुणाकारा त्रिभङ्गी तनुवल्लरिः ।
थात्कारी थारवा थान्ता दोहिनी दीन वत्सला ॥ ७४ ॥

दानवान्तकरी दुर्गा दुर्गासुर निबर्हिणी ।
देवरीतिर् दिवारात्रिर् द्रौपदी दुन्दुभिस्वना ॥ ७५ ॥

देवयानी दुरावासा दारिद्र्योद् भेदिनी दिवा ।
दामोदर प्रिया दीप्ता दिग्वासा दिग्विमोहिनी ॥ ७६ ॥

दण्डका ऽ रण्य निलया दण्डिनी देव पूजिता ।
देव वन्द्या दिविषदा द्वेषिणी दानवाकृतिः ॥ ७७ ॥

दीनानाथ स्तुता दीक्षा दैवतादि स्वरूपिणी ।
धात्री धनुर्धरा धेनुर् धारिणी धर्मचारिणी ॥ ७८ ॥

धुरंधरा धराधारा धनदा धान्य दोहिनी ।
धर्मशीला धनाध्यक्षा धर्म वेद विशारदा ॥ ७९ ॥

धृतिर् धन्या धृतपदा धर्मराज प्रिया ध्रुवा ।
धूमावती धूमकेशी धर्म शास्त्र प्रकाशिनी ॥ ८० ॥

नन्दा नन्द प्रिया निद्रा नृनुता नन्दनात्मिका ।
नर्मदा नलिनी नीला नीलकण्ठ समाश्रया ॥ ८१ ॥

नारायण प्रिया नित्या निर्मला निर्गुणा निधिः ।
निराधारा निरुपमा नित्य शुद्धा निरंजना ॥ ८२ ॥

नादबिन्दु कलातीता नादबिन्दु कलात्मिका ।
नृसिंहिनी नगधरा नृपनाग विभूषिता ॥ ८३ ॥

नरक क्लेश शमनी नारायण पदोद्भवा ।
निरवद्या निराकारा नारद प्रिय कारिणी ॥ ८४ ॥

नानाज्योतिः समाख्याता निधिदा निर्मलात्मिका ।
नवसूत्र धरा नीतिर् निरुपद्रव कारिणी ॥ ८५ ॥

नन्दजा नवरत्नाढ्या नैमिषारण्य वासिनी ।
नवनीत प्रिया नारी नीलजीमूत निस्वना ॥ ८६ ॥

निमेषिणी नदीरूपा नीलग्रीवा निशीश्वरी ।
नामावलिर् निशुंभघ्नी नागलोक निवासिनी ॥ ८७ ॥

नवजाम्बूनद प्रख्या नागलोका ऽ धिदेवता ।
नूपुराक्रान्त चरणा नरचित्त प्रमोदिनी ॥ ८८ ॥

निमग्ना रक्त नयना निर्घात सम निस्वना ।
नन्दनोद्यान निलया निर्व्यूहोपरिचारिणी ॥ ८९ ॥

पार्वती परमोदारा परब्रह्मात्मिका परा ।
पञ्च कोश विनिर्मुक्ता पञ्च पातक नाशिनी ॥ ९० ॥

परचित्त विधानज्ञा पञ्चिका पञ्च रूपिणी ।
पूर्णिमा परमा प्रीतिः परतेजः प्रकाशिनी ॥ ९१ ॥

पुराणी पौरुषी पुण्या पुण्डरीक निभेक्षणा ।
पाताल तल निर्मग्ना प्रीता प्रीति विवर्धिनी ॥ ९२ ॥

पावनी पादसहिता पेशला पवनाशिनी ।
प्रजापतिः परिश्रान्ता पर्वत स्तन मण्डला ॥ ९३ ॥

पद्मप्रिया पद्मसंस्था पद्माक्षी पद्मसंभवा ।
पद्मपत्रा पद्मपदा पद्मिनी प्रिय भाषिणी ॥ ९४ ॥

पशुपाश विनिर्मुक्ता पुरन्ध्री पुरवासिनी ।
पुष्कला पुरुषा पर्वा पारिजात सुमप्रिया ॥ ९५ ॥

पतिव्रता पवित्रांगी पुष्पहास परायणा ।
प्रज्ञावती सुता पौत्री पुत्र पूज्या पयस्विनी ॥ ९६ ॥

पट्टि पाश धरा पङ्क्तिः पितृ लोक प्रदायिनी ।
पुराणी पुण्यशीला च प्रणतार्ति विनाशिनी ॥ ९७ ॥

प्रद्युम्न जननी पुष्टा पितामह परिग्रहा ।
पुण्डरीक पुरा वासा पुण्डरीक समानना ॥ ९८ ॥

पृथुजङ्घा पृथुभुजा पृथुपादा पृथूदरी ।
प्रवाल शोभा पिङ्गाक्षी पीतवासाः प्रचापला ॥ ९९ ॥

प्रसवा पुष्टिदा पुण्या प्रतिष्ठा प्रणवागतिः ।
पंचवर्णा पंचवाणी पंचिका पंचर स्थिता ॥ १०० ॥

परमाया परज्योतिः परप्रीतिः परागतिः ।
पराकाष्ठा परेशानी पाविनी पावकद्युतिः ॥ १०१ ॥

पुण्यभद्रा परिच्छेद्या पुष्पहासा पृथूदरी ।
पीताङ्गी पीतवसना पीतशय्या पिशाचिनी ॥ १०२ ॥

पीतक्रिया पिशाचघ्नी पाटलाक्षी पटुक्रिया ।
पञ्च भक्ष प्रियाचारा पूतना प्राण घातिनी ॥ १०३ ॥

पुन्नाग वन मध्यस्था पुण्य तीर्थ निषेविता ।
पञ्चाङ्गी च पराशक्तिः परमाह्लाद कारिणी ॥ १०४ ॥

पुष्पकाण्ड स्थिता पूषा पोषिताखिल विष्टपा ।
पानप्रिया पञ्चशिखा पन्नगोपरिशायिनी ॥ १०५ ॥

पञ्च मात्रात्मिका पृथ्वी पथिका पृथुदोहिनी ।
पुराण न्याय मीमांसा पाटली पुष्प गन्धिनी ॥ १०६ ॥

पुण्यप्रजा पारदात्री परमार्गैक गोचरा ।
प्रवाल शोभा पूर्णाशा प्रणवा पल्लवोदरी ॥ १०७ ॥

फलिनी फलदा फल्गुः फूत्कारी फलकाकृतिः ।
फणीन्द्र भोग शयना फणि मण्डल मण्डिता ॥ १०८ ॥

बालबाला बहुमता बालातप निभांशुका ।
बलभद्र प्रिया वन्द्या बडवा बुद्धि संस्तुता ॥ १०९ ॥

बन्दीदेवी बिलवती बडिशघ्नी बलिप्रिया ।
बान्धवी बाधिता बुद्धिर् बन्धूक कुसुम प्रिया ॥ ११० ॥

बालभानु प्रभाकारा ब्राह्मी ब्राह्मण देवता ।
बृहस्पति स्तुता बृन्दा बृन्दावन विहारिणी ॥ १११ ॥

बालाकिनी बिलाहारा बिलवासा बहूदका ।
बहुनेत्रा बहुपदा बहुकर्णा ऽ वतंसिका ॥ ११२ ॥

बहु बाहु युता बीज रूपिणी बहु रूपिणी ।
बिन्दु नाद कलातीता बिन्दु नाद स्वरूपिणी ॥ ११३ ॥

बद्ध गोधाङ्गुलि त्राणा बदर्याश्रम वासिनी ।
बृन्दारका बृहत् स्कन्धा बृहती बाणपातिनी ॥ ११४ ॥

वृन्दाध्यक्षा बहुनुता बनिता बहुविक्रमा ।
बद्ध पद्मासनासीना बिल्व पत्र तल स्थिता ॥ ११५ ॥

बोधिद्रुम निजावासा बडिस्था बिन्दु दर्पणा ।
बाला बाणासनवती वडवानल वेगिनी ॥ ११६ ॥

ब्रह्माण्ड बहिरन्तः स्था ब्रह्म कङ्कण सूत्रिणी ।
भवानी भीषणवती भाविनी भयहारिणी ॥ ११७ ॥

भद्रकाली भुजङ्गाक्षी भारती भारताशया ।
भैरवी भीषणाकारा भूतिदा भूतिमालिनी ॥ ११८ ॥

भामिनी भोगनिरता भद्रदा भूरिविक्रमा ।
भूतावासा भृगुलता भार्गवी भूसुरार्चिता ॥ ११९ ॥

भागीरथी भोगवती भवनस्था भिषग्वरा ।
भामिनी भोगिनी भाषा भवानी भूरिदक्षिणा ॥ १२० ॥

भर्गात्मिका भीमवती भवबन्ध विमोचिनी ।
भजनीया भूतधात्री रञ्जिता भुवनेश्वरी ॥ १२१ ॥

भुजङ्ग वलया भीमा भेरुण्डा भागधेयिनी ।
माता माया मधुमती मधुजिह्वा मधुप्रिया ॥ १२२ ॥

महादेवी महाभागा मालिनी मीनलोचना ।
मायातीता मधुमती मधुमांसा मधुद्रवा ॥ १२३ ॥

मानवी मधुसंभूता मिथिलापुर वासिनी ।
मधुकैटभ संहर्त्री मेदिनी मेघ मालिनी ॥ १२४ ॥

मन्दोदरी महामाया मैथिली मसृण प्रिया ।
महालक्ष्मीर् महाकाली महाकन्या महेश्वरी ॥ १२५ ॥

माहेन्द्री मेरुतनया मन्दार कुसुमार्चिता ।
मञ्जु मञ्जीर चरणा मोक्षदा मञ्जु भाषिणी ॥ १२६ ॥

मधुर द्राविणी मुद्रा मलया मलयान्विता ।
मेधा मरकत श्यामा मागधी मेनकात्मजा ॥ १२७ ॥

महामारी महावीरा महाश्यामा मनुस्तुता ।
मातृका मिहिराभासा मुकुन्द पद विक्रमा ॥ १२८ ॥

मूलाधार स्थिता मुग्धा मणिपूरक वासिनी ।
मृगाक्षी महिषा ऽ रूढा महिषासुर मर्दिनी ॥ १२९ ॥

योगासना योगगम्या योगा यौवनकाश्रया ।
यौवनी युद्ध मध्यस्था यमुना युगधारिणी ॥ १३० ॥

यक्षिणी योगयुक्ता च यक्षराज प्रसूतिनी ।
यात्रा यानविधानज्ञा यदुवंश समुद्भवा ॥ १३१ ॥

यकारादि हकारान्ता याजुषी यज्ञ रूपिणी ।
यामिनी योगनिरता यातुधान भयङ्करी ॥ १३२ ॥

रुक्मिणी रमणी रामा रेवती रेणुका रतिः ।
रौद्री रौद्रप्रियाकारा राम माता रतिप्रिया ॥ १३३ ॥

रोहिणी राज्यदा रेवा रमा राजीव लोचना ।
राकेशी रूप संपन्ना रत्न सिंहासन स्थिता ॥ १३४ ॥

रक्त माल्याम्बर धरा रक्त गन्धानुलेपना ।
राजहंस समारूढा रम्भा रक्त बलि प्रिया ॥ १३५ ॥

रमणीय युगाधारा राजिता ऽ खिल भूतला ।
रुरुचर्म परीधाना रथिनी रत्न मालिका ॥ १३६ ॥

रोगेशी रोग शमनी राविणी रोम हर्षिणी ।
रामचन्द्र पदाक्रान्ता रावणच्छेद कारिणी ॥ १३७ ॥

रत्न वस्त्र परिच्छन्ना रथस्था रुक्म भूषणा ।
लज्जाधिदेवता लोला ललिता लिङ्ग धारिणी ॥ १३८ ॥

लक्ष्मीर् लोला लुप्तविषा लोकिनी लोकविश्रुता ।
लज्जा लम्बोदरी देवी ललना लोकधारिणी ॥ १३९ ॥

वरदा वन्दिता विद्या वैष्णवी विमलाकृतिः ।
वाराही विरजा वर्षा वरलक्ष्मीर् विलासिनी ॥ १४० ॥

विनता व्योम मध्यस्था वारिजासन संस्थिता ।
वारुणी वेणु संभूता वीतिहोत्रा विरूपिणी ॥ १४१ ॥

वायु मण्डल मध्यस्था विष्णुरूपा विधिप्रिया ।
विष्णुपत्नी विष्णुमती विशालाक्षी वसुन्धरा ॥ १४२ ॥

वामदेव प्रिया वेला वज्रिणी वसुदोहिनी ।
वेदाक्षर परीताङ्गी वाजपेय फलप्रदा ॥ १४३ ॥

वासवी वाम जननी वैकुण्ठ निलया वरा ।
व्यास प्रिया वर्मधरा वाल्मीकि परिसेविता ॥ १४४ ॥

शाकम्भरी शिवा शान्ता शरदा शरणागतिः ।
शातोदरी शुभाचारा शुंभासुर विमर्दिनी ॥ १४५ ॥

शोभावती शिवाकारा शंकरार्ध शरीरिणी ।
शोणा शुभाशया शुभ्रा शिरः सन्धान कारिणी ॥ १४६ ॥

शरावती शरानन्दा शरज्ज्योत्स्ना शुभानना ।
शरभा शूलिनी शुद्धा शबरी शुकवाहना ॥ १४७ ॥

श्रीमती श्रीधरानन्दा श्रवणानन्द दायिनी ।
शर्वाणी शर्वरी वन्द्या षड् भाषा षड् ऋतु प्रिया ॥ १४८ ॥

षडाधार स्थिता देवी षण्मुख प्रिय कारिणी ।
षडंग रूप सुमतिः सुरासुर नमस्कृता ॥ १४९ ॥

सरस्वती सदाधारा सर्व मङ्गल कारिणी ।
सामगान प्रिया सूक्ष्मा सावित्री साम सम्भवा ॥ १५० ॥

सर्वावासा सदानन्दा सुस्तनी सागराम्बरा ।
सर्वैश्वर्य प्रिया सिद्धिः साधु बन्धु पराक्रमा ॥ १५१ ॥

सप्तर्षि मण्डल गता सोम मण्डल वासिनी ।
सर्वज्ञा सान्द्रकरुणा समानाधिक वर्जिता ॥ १५२ ॥

सर्वोत्तुङ्गा सङ्गहीना सद्गुणा सकलेष्टदा ।
सरघा सूर्य तनया सुकेशी सोम संहतिः ॥ १५३ ॥

हिरण्य वर्णा हरिणी ह्रींकारी हंस वाहिनी ।
क्षौम वस्त्र परीताङ्गी क्षीराब्धि तनया क्षमा ॥ १५४ ॥

गायत्री चैव सावित्री पार्वती च सरस्वती ।
वेदगर्भा वरारोहा श्रीगायत्री पराम्बिका ॥ १५५ ॥

## ॥ फलश्रुतिः ॥

इति साहस्रकं नाम्नां गायत्र्याश् चैव नारद ।
पुण्यदं सर्व पापघ्नं महासम्पत्ति दायकम् ॥ १५६ ॥

एवं नामानि गायत्र्यास् तोषोत्पत्ति कराणि हि ।
अष्टम्यां च विशेषेण पठितव्यं द्विजैः सह ॥ १५७ ॥

जपं कृत्वा होम पूजा ध्यानं कृत्वा विशेषतः ।
यस्मै कस्मै न दातव्यं गायत्र्यास्तु विशेषतः ॥ १५८ ॥

सुभक्ताय सुशिष्याय वक्तव्यं भूसुराय वै ।
भ्रष्टेभ्यः साधकेभ्यश्च बान्धवेभ्यो न दर्शयेत् ॥ १५९ ॥

यद् गृहे लिखितं शास्त्रं भयं तस्य न कस्यचित् ।
चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति ॥ १६० ॥

इदं रहस्यं परमं गुह्याद् गुह्य तरं महत् ।
पुण्य प्रदं मनुष्याणां दरिद्राणां निधि प्रदम् ॥ १६१ ॥

मोक्ष प्रदं मुमुक्षूणां कामिनां सर्व कामदम् ।
रोगाद् वै मुच्यते रोगी बद्धो मुच्येत बन्धनात् ॥ १६२ ॥

ब्रह्म हत्या सुरापानं सुवर्णस्तेयिनो नराः ।
गुरु तल्प गतो वापि पातकान् मुच्यते सकृत् ॥ १६३ ॥

असत् प्रतिग्रहाच् चैव ऽ भक्ष्य भक्षाद् विशेषतः ।
पाखण्डानृत्य मुख्यभ्यः पाठनाद् एव मुच्यते ॥ १६४ ॥

इदं रहस्यममलं मयोक्तं पद्मजोद्भव ।
ब्रह्म सायुज्यदं नृणां सत्यं सत्यं न संशयः ॥ १६५ ॥

**॥ इति श्रीदेवी भागवत महापुराणे द्वादश स्कन्धे गायत्री सहस्रनाम स्तोत्रम् सम्पूर्णम् ॥**





ॐ अचिन्त्य लक्षणायै नमः
ॐ अव्यक्तायै नमः
ॐ अर्ध मातृ महेश्वर्यै नमः
ॐ अमृतार्णव मध्यस्थायै नमः
ॐ अजितायै नमः
ॐ अपराजितायै नमः
ॐ अणिमादि गुणाधारायै नमः
ॐ अर्क मण्डल संस्थितायै नमः
ॐ अजरायै नमः
ॐ अजायै नमः
ॐ अपरायै नमः
ॐ धर्मायै नमः
ॐ अक्ष सूत्र धरायै नमः
ॐ अधरायै नमः
ॐ अकारादि क्षकारान्तायै नमः
ॐ अरि षड्वर्ग भेदिन्यै नमः
ॐ अंजनादि प्रतीकाशायै नमः
ॐ अंजनाद्रि निवासिन्यै नमः
ॐ अदित्यै नमः
ॐ अजपायै नमः
ॐ विद्यायै नमः
ॐ अरविन्द निभेक्षणायै नमः
ॐ अन्तर्बहिः स्थितायै नमः
ॐ अविद्या ध्वंसिन्यै नमः
ॐ अन्तरात्मिकायै नमः
ॐ अजायै नमः
ॐ अजमुखा वासायै नमः
ॐ अरविन्द निभाननायै नमः
ॐ अर्ध मात्रायै नमः
ॐ अर्थ दानज्ञायै नमः
ॐ अरि मण्डल मर्दिन्यै नमः
ॐ असुरघ्न्यै नमः
ॐ ह्यमावास्यायै नमः
ॐ अलक्ष्मीघ्न्यै नमः
ॐ अन्त्यजार्चितायै नमः
ॐ आदिलक्ष्म्यै नमः
ॐ आदिशक्त्यै नमः
ॐ आकृत्यै नमः
ॐ अयताननायै नमः
ॐ आदित्य पदवी चारायै नमः
ॐ आदित्य परिसेवितायै नमः
ॐ आचार्यायै नमः
ॐ आवर्तनायै नमः
ॐ आचारायै नमः
ॐ आदि मूर्ति निवासिन्यै नमः
ॐ आग्नेय्यै नमः
ॐ आमर्यै नमः
ॐ आद्यायै नमः
ॐ आराध्यायै नमः
ॐ आसन स्थितायै नमः
ॐ आधार निलयायै नमः
ॐ आधारा चायै नमः
ॐ आकाशान्त निवासिन्यै नमः
ॐ आद्याक्षर समायुक्तायै नमः
ॐ आन्तराकाश रूपिण्यै नमः
ॐ आदित्य मण्डल गतायै नमः
ॐ आन्तरध्वान्त नाशिन्यै नमः
ॐ इन्दिरायै नमः
ॐ इष्टदायै नमः
ॐ इष्टायै नमः
ॐ इन्दीवर निभेक्षणायै नमः
ॐ इरावत्यै नमः

ॐ इन्द्रपदायै नमः
ॐ इन्द्राण्यै नमः
ॐ इन्दु रूपिण्यै नमः
ॐ इक्षु कोदण्ड संयुक्तायै नमः
ॐ इषु संधान कारिण्यै नमः
ॐ इन्द्र नील समाकारायै नमः
ॐ इडा पिङ्गल रूपिण्यै नमः
ॐ इन्द्राक्ष्यै नमः
ॐ ईश्वरी देव्यै नमः
ॐ ईहात्रय विवर्जितायै नमः
ॐ उमायै नमः
ॐ उषायै नमः
ॐ उडु निभायै नमः
ॐ उर्वारुक फलाननायै नमः
ॐ उडु प्रभायै नमः
ॐ उडुमत्यै नमः
ॐ उडुपायै नमः
ॐ उडु मध्यगायै नमः
ॐ ऊर्ध्वायै नमः
ॐ ऊर्ध्व केश्यै नमः
ॐ ऊर्ध्वा ऽ धोगति भेदिन्यै नमः
ॐ ऊर्ध्व बाहु प्रियायै नमः
ॐ ऊर्मिमाला वाग्ग्रन्थ दायिन्यै नमः
ॐ ऋतायै नमः
ॐ ऋष्यै नमः
ॐ ऋतुमत्यै नमः
ॐ ऋषि देव नमस्कृतायै नमः
ॐ ऋग्वेदायै नमः
ॐ ऋणहर्त्र्यै नमः
ॐ ऋषि मण्डल चारिण्यै नमः
ॐ ऋद्धिदायै नमः
ॐ ऋजु मार्गस्थायै नमः
ॐ ऋजु धर्मायै नमः
ॐ ऋतु प्रदायै नमः
ॐ ऋग्वेद निलयायै नमः
ॐ ऋज्व्यै नमः
ॐ लुप्त धर्म प्रवर्तिन्यै नमः
ॐ लूतारि वर सम्भूतायै नमः
ॐ लूतादि विषहारिण्यै नमः
ॐ एकाक्षरायै नमः
ॐ एकमात्रे नमः
ॐ एका चैकैकनिष्ठितायै नमः
ॐ ऐन्द्र्यै नमः
ॐ ऐरावता ऽ रूढायै नमः
ॐ ऐहिकामुष्मिक प्रदायै नमः
ॐ ओंकारायै नमः
ॐ ओषध्यै नमः
ॐ ओतायै नमः
ॐ ओतप्रोत निवासिन्यै नमः
ॐ और्वायै नमः
ॐ औषध सम्पन्नायै नमः
ॐ औपासन फल प्रदायै नमः
ॐ अण्ड मध्य स्थिता देव्यै नमः
ॐ अःकार मनु रूपिण्यै नमः
ॐ कात्यायन्यै नमः
ॐ कालरात्र्यै नमः
ॐ कामाक्ष्यै नमः
ॐ कामसुन्दर्यै नमः
ॐ कमलायै नमः
ॐ कामिन्यै नमः
ॐ कान्तायै नमः
ॐ कामदायै नमः
ॐ कालकण्ठिन्यै नमः
ॐ करिकुंभ स्तनभरायै नमः

ॐ करवीर सुवासिन्यै नमः
ॐ कल्याण्यै नमः
ॐ कुण्डलवत्यै नमः
ॐ कुरुक्षेत्र निवासिन्यै नमः
ॐ कुरुविन्द दलाकारायै नमः
ॐ कुण्डल्यै नमः
ॐ कुमुदालयायै नमः
ॐ कालजिह्वायै नमः
ॐ करालास्यायै नमः
ॐ कालिकायै नमः
ॐ काल रूपिण्यै नमः
ॐ कमनीय गुणायै नमः
ॐ कान्त्यै नमः
ॐ कलाधारायै नमः
ॐ कुमुद्वत्यै नमः
ॐ कौशिक्यै नमः
ॐ कमलाकारायै नमः
ॐ कामचार प्रभञ्जिन्यै नमः
ॐ कौमार्यै नमः
ॐ करुणापाङ्ग्यै नमः
ॐ ककुबन्तायै नमः
ॐ करि प्रियायै नमः
ॐ केसर्यै नमः
ॐ केशव नुतायै नमः
ॐ कदम्बायै नमः
ॐ कुसुम प्रियायै नमः
ॐ कालिन्दायै नमः
ॐ कालिकायै नमः
ॐ काञ्च्यै नमः
ॐ कलशोद्भव संस्तुतायै नमः
ॐ काममात्रे नमः
ॐ क्रतुमत्यै नमः
ॐ कामरूपायै नमः
ॐ कृपावत्यै नमः
ॐ कुमार्यै नमः
ॐ कुण्ड निलयायै नमः
ॐ किरात्यै नमः
ॐ कीर वाहनायै नमः
ॐ कैकेय्यै नमः
ॐ कोकिलालापायै नमः
ॐ केतक्यै नमः
ॐ कुसुम प्रियायै नमः
ॐ कमण्डलुधरायै नमः
ॐ काल्यै नमः
ॐ कर्म निर्मूल कारिण्यै नमः
ॐ कलहंसगत्यै नमः
ॐ कक्षायै नमः
ॐ कृतकौतुक मङ्गलायै नमः
ॐ कस्तूरी तिलकायै नमः
ॐ कम्रायै नमः
ॐ करीन्द्र गमनायै नमः
ॐ कुह्वै नमः
ॐ कर्पूर लेपनायै नमः
ॐ कृष्णायै नमः
ॐ कपिलायै नमः
ॐ कुहराश्रयायै नमः
ॐ कूटस्थायै नमः
ॐ कुधरायै नमः
ॐ कम्रायै नमः
ॐ कुक्षिस्था ऽ खिल विष्टपायै नमः
ॐ खड्ग खेट करायै नमः
ॐ खर्वायै नमः
ॐ खेचर्यै नमः
ॐ खग वाहनायै नमः

ॐ खट्वाङ्ग धारिण्यै नमः
ॐ ख्यातायै नमः
ॐ खगराजो ऽ परिस्थितायै नमः
ॐ खलघ्न्यै नमः
ॐ खण्डितजरायै नमः
ॐ खण्डाख्यान प्रदायिन्यै नमः
ॐ खण्डेन्दु तिलकायै नमः
ॐ गङ्गायै नमः
ॐ गणेश गुह पूजितायै नमः
ॐ गायत्र्यै नमः
ॐ गोमत्यै नमः
ॐ गीतायै नमः
ॐ गान्धार्यै नमः
ॐ गानलोलुपायै नमः
ॐ गौतम्यै नमः
ॐ गामिन्यै नमः
ॐ गाधायै नमः
ॐ गन्धर्वा ऽ प्सर सेवितायै नमः
ॐ गोविन्द चरणाक्रान्तायै नमः
ॐ गुणत्रय विभाजितायै नमः
ॐ गान्धर्व्यै नमः
ॐ गह्वर्यै नमः
ॐ गोत्रायै नमः
ॐ गिरीशायै नमः
ॐ गहनायै नमः
ॐ गम्यै नमः
ॐ गुहावासायै नमः
ॐ गुणवत्यै नमः
ॐ गुरु पाप प्रणाशिन्यै नमः
ॐ गुर्व्यै नमः
ॐ गुणवत्यै नमः
ॐ गुह्यायै नमः

ॐ गोप्तव्यायै नमः
ॐ गुण दायिन्यै नमः
ॐ गिरिजायै नमः
ॐ गुह्य मातङ्ग्यै नमः
ॐ गरुड ध्वज वल्लभायै नमः
ॐ गर्वा ऽ पहारिण्यै नमः
ॐ गोदायै नमः
ॐ गोकुलस्थायै नमः
ॐ गदाधरायै नमः
ॐ गोकर्ण निलया सक्तायै नमः
ॐ गुह्य मण्डल वर्तिन्यै नमः
ॐ धर्मदायै नमः
ॐ धनदायै नमः
ॐ घण्टायै नमः
ॐ घोर दानव मर्दिन्यै नमः
ॐ घृणि मन्त्र मय्यै नमः
ॐ घोषायै नमः
ॐ घन संपात दायिन्यै नमः
ॐ घण्टारव प्रियायै नमः
ॐ घ्राणायै नमः
ॐ घृणि संतुष्ट कारिण्यै नमः
ॐ घनारि मण्डलायै नमः
ॐ घूर्णायै नमः
ॐ घृताच्यै नमः
ॐ घनवेगिन्यै नमः
ॐ ज्ञान धातु मय्यै नमः
ॐ चर्चायै नमः
ॐ चर्चितायै नमः
ॐ चारुहासिन्यै नमः
ॐ चटुलायै नमः
ॐ चण्डिकायै नमः
ॐ चित्रायै नमः

ॐ चित्रमाल्य विभूषितायै नमः
ॐ चतुर्भुजायै नमः
ॐ चारुदन्तायै नमः
ॐ चातुर्यै नमः
ॐ चरितप्रदायै नमः
ॐ चूलिकायै नमः
ॐ चित्र वस्त्रान्तायै नमः
ॐ चन्द्रमः कर्ण कुण्डलायै नमः
ॐ चन्द्रहासायै नमः
ॐ चारुदात्र्यै नमः
ॐ चकोर्यै नमः
ॐ चन्द्रहासिन्यै नमः
ॐ चन्द्रिकायै नमः
ॐ चन्द्रधात्र्यै नमः
ॐ चौर्यै नमः
ॐ चौरायै नमः
ॐ चण्डिकायै नमः
ॐ चञ्चद् वाग्वादिन्यै नमः
ॐ चन्द्र चूडायै नमः
ॐ चोर विनाशिन्यै नमः
ॐ चारु चन्दन लिप्ताङ्ग्यै नमः
ॐ चञ्चच् चामर वीजितायै नमः
ॐ चारुमध्यायै नमः
ॐ चारुगत्यै नमः
ॐ चन्दिलायै नमः
ॐ चन्द्र रूपिण्यै नमः
ॐ चारु होम प्रियायै नमः
ॐ चार्वायै नमः
ॐ चरितायै नमः
ॐ चक्रबाहुकायै नमः
ॐ चन्द्र मण्डल मध्यस्थायै नमः
ॐ चन्द्र मण्डल दर्पणायै नमः

ॐ चक्रवाक स्तन्यै नमः
ॐ चेष्टायै नमः
ॐ चित्रायै नमः
ॐ चारु विलासिन्यै नमः
ॐ चित् स्वरूपायै नमः
ॐ चन्द्रवत्यै नमः
ॐ चन्द्रमायै नमः
ॐ चन्दन प्रियायै नमः
ॐ चोदयित्र्यै नमः
ॐ चिरप्रज्ञायै नमः
ॐ चातकायै नमः
ॐ चारुहेतुक्यै नमः
ॐ छत्रयातायै नमः
ॐ छत्रधरायै नमः
ॐ छायायै नमः
ॐ छन्दः परिच्छदायै नमः
ॐ छायादेव्यै नमः
ॐ छिद्रनखायै नमः
ॐ छन्नेन्द्रिय विसर्पिण्यै नमः
ॐ छन्दो ऽ नुष्टुप् प्रतिष्ठान्तायै नमः
ॐ छिद्रोपद्रव भेदिन्यै नमः
ॐ छेदायै नमः
ॐ छत्रेश्वर्यै नमः
ॐ छिन्नायै नमः
ॐ छुरिकायै नमः
ॐ छेदन प्रियायै नमः
ॐ जनन्यै नमः
ॐ जन्मरहितायै नमः
ॐ जातवेदायै नमः
ॐ जगन्मय्यै नमः
ॐ जाह्नव्यै नमः
ॐ जटिलायै नमः

ॐ जेत्र्यै नमः
ॐ जरामरण वर्जितायै नमः
ॐ जम्बू द्वीप वत्यै नमः
ॐ ज्वालायै नमः
ॐ जयन्त्यै नमः
ॐ जलशालिन्यै नमः
ॐ जितेन्द्रियायै नमः
ॐ जितक्रोधायै नमः
ॐ जितामित्रायै नमः
ॐ जगत् प्रियायै नमः
ॐ जातरूप मय्यै नमः
ॐ जिह्वायै नमः
ॐ जानक्यै नमः
ॐ जगत्यै नमः
ॐ जरायै नमः
ॐ जनित्र्यै नमः
ॐ जह्नु तनयायै नमः
ॐ जगत्त्रय हितैषिण्यै नमः
ॐ ज्वालामुख्यै नमः
ॐ जपवत्यै नमः
ॐ ज्वलघ्न्यै नमः
ॐ जितविष्टपायै नमः
ॐ जिताक्रान्त मय्यै नमः
ॐ ज्वालायै नमः
ॐ जाग्रत्यै नमः
ॐ ज्वर देवतायै नमः
ॐ ज्वलन्त्यै नमः
ॐ जलदायै नमः
ॐ ज्येष्ठायै नमः
ॐ ज्याघोषास्फोट दिङ्मुख्यै नमः
ॐ जम्भिन्यै नमः
ॐ जृम्भणायै नमः
ॐ जृम्भायै नमः
ॐ ज्वलन् माणिक्य कुण्डलायै नमः
ॐ झिंझिकायै नमः
ॐ झण निर्घोषायै नमः
ॐ झंझा मारुत वेगिन्यै नमः
ॐ झल्लरी वाद्य कुशलायै नमः
ॐ ञरूपायै नमः
ॐ ञभुजा स्मृतायै नमः
ॐ टङ्क बाण समायुक्तायै नमः
ॐ टङ्किन्यै नमः
ॐ टङ्क भेदिन्यै नमः
ॐ टङ्की गण कृता घोषायै नमः
ॐ टङ्कनीय महोरसायै नमः
ॐ टङ्कार कारिणी देव्यै नमः
ॐ टठ शब्द् निनादिन्यै नमः
ॐ डामर्यै नमः
ॐ डाकिन्यै नमः
ॐ डिम्भायै नमः
ॐ डुण्डुमारैक निर्जितायै नमः
ॐ डामरी तन्त्र मार्गस्थायै नमः
ॐ डमड् डमरु नादिन्यै नमः
ॐ डिण्डीरवसहायै नमः
ॐ डिम्भ लसत्क्रीडा परायणायै नमः
ॐ ढुण्ढि विघ्नेश जनन्यै नमः
ॐ ढक्का हस्तायै नमः
ॐ ढिलिव्रजायै नमः
ॐ नित्यज्ञानायै नमः
ॐ निरुपमायै नमः
ॐ निर्गुणायै नमः
ॐ नर्मदा नद्यै नमः
ॐ त्रिगुणायै नमः
ॐ त्रिपदायै नमः

ॐ तन्त्र्यै नमः
ॐ तुलस्यै नमः
ॐ तरुणायै नमः
ॐ तरुः
ॐ त्रिविक्रम पदा क्रान्तायै नमः
ॐ तुरीय पद गामिन्यै नमः
ॐ तरुणादित्य संकाशायै नमः
ॐ तामस्यै नमः
ॐ तुहिनायै नमः
ॐ तुरायै नमः
ॐ त्रिकाल ज्ञान सम्पन्नायै नमः
ॐ त्रिवल्यै नमः
ॐ त्रिलोचनायै नमः
ॐ त्रिशक्त्यै नमः
ॐ त्रिपुरायै नमः
ॐ तुङ्गायै नमः
ॐ तुरङ्ग वदनायै नमः
ॐ तिमिङ्गिलायै नमः
ॐ तीव्रायै नमः
ॐ त्रिस्रोतायै नमः
ॐ तामसादिन्यै नमः
ॐ तन्त्र मन्त्र विशेषज्ञायै नमः
ॐ तनु मध्यायै नमः
ॐ त्रिविष्टपायै नमः
ॐ त्रिसन्ध्यायै नमः
ॐ त्रिस्तन्यै नमः
ॐ तोषा संस्थायै नमः
ॐ ताल प्रतापिन्यै नमः
ॐ ताटङ्किन्यै नमः
ॐ तुषाराभायै नमः
ॐ तुहिनाचल वासिन्यै नमः
ॐ तन्तुजाल समायुक्तायै नमः
ॐ तार हारावलि प्रियायै नमः
ॐ तिल होम प्रियायै नमः
ॐ तीर्थायै नमः
ॐ तमाल कुसुमाकृत्यै नमः
ॐ तारकायै नमः
ॐ त्रियुतायै नमः
ॐ तन्व्यै नमः
ॐ त्रिशङ्कु परिवारितायै नमः
ॐ तलोदर्यै नमः
ॐ तिलाभूषायै नमः
ॐ ताटङ्क प्रिय वाहिन्यै नमः
ॐ त्रिजटायै नमः
ॐ तित्तिर्यै नमः
ॐ तृष्णायै नमः
ॐ त्रिविधायै नमः
ॐ तरुणाकृत्यै नमः
ॐ तप्त काञ्चन संकाशायै नमः
ॐ तप्त काञ्चन भूषणायै नमः
ॐ त्रैयम्बकायै नमः
ॐ त्रिवर्गायै नमः
ॐ त्रिकाल ज्ञान दायिन्यै नमः
ॐ तर्पणायै नमः
ॐ तृप्तिदायै नमः
ॐ तृप्तायै नमः
ॐ तामस्यै नमः
ॐ तुम्बुरु स्तुतायै नमः
ॐ तार्क्ष्यस्थायै नमः
ॐ त्रिगुणाकारायै नमः
ॐ त्रिभङ्ग्यै नमः
ॐ तनुवल्लर्यै नमः
ॐ थात्कार्यै नमः
ॐ थारवायै नमः

ॐ थान्तायै नमः
ॐ दोहिन्यै नमः
ॐ दीन वत्सलायै नमः
ॐ दानवान्तकर्यै नमः
ॐ दुर्गायै नमः
ॐ दुर्गासुर निबर्हिण्यै नमः
ॐ देवरीत्यै नमः
ॐ दिवारात्र्यै नमः
ॐ द्रौपद्यै नमः
ॐ दुन्दुभिस्वनायै नमः
ॐ देवयान्यै नमः
ॐ दुरावासायै नमः
ॐ दारिद्र्योद् भेदिन्यै नमः
ॐ दिवायै नमः
ॐ दामोदर प्रियायै नमः
ॐ दीप्तायै नमः
ॐ दिग्वासायै नमः
ॐ दिग्विमोहिन्यै नमः
ॐ दण्डका ऽ रण्य निलयायै नमः
ॐ दण्डिन्यै नमः
ॐ देव पूजितायै नमः
ॐ देव वन्द्यायै नमः
ॐ दिविषदायै नमः
ॐ द्वेषिण्यै नमः
ॐ दानवाकृत्यै नमः
ॐ दीनानाथ स्तुतायै नमः
ॐ दीक्षायै नमः
ॐ दैवतादि स्वरूपिण्यै नमः
ॐ धात्र्यै नमः
ॐ धनुर्धरायै नमः
ॐ धेनुर् धारिण्यै नमः
ॐ धर्मचारिण्यै नमः
ॐ धुरंधरायै नमः
ॐ धराधारायै नमः
ॐ धनदायै नमः
ॐ धान्य दोहिन्यै नमः
ॐ धर्मशीलायै नमः
ॐ धनाध्यक्षायै नमः
ॐ धर्म वेद विशारदायै नमः
ॐ धृत्यै नमः
ॐ धन्यायै नमः
ॐ धृतपदायै नमः
ॐ धर्मराज प्रियायै नमः
ॐ ध्रुवायै नमः
ॐ धूमावत्यै नमः
ॐ धूमकेश्यै नमः
ॐ धर्म शास्त्र प्रकाशिन्यै नमः
ॐ नन्दायै नमः
ॐ नन्द प्रियायै नमः
ॐ निद्रायै नमः
ॐ नृनुतायै नमः
ॐ नन्दनात्मिकायै नमः
ॐ नर्मदायै नमः
ॐ नलिन्यै नमः
ॐ नीलायै नमः
ॐ नीलकण्ठ समाश्रयायै नमः
ॐ नारायण प्रियायै नमः
ॐ नित्यायै नमः
ॐ निर्मलायै नमः
ॐ निर्गुणायै नमः
ॐ निध्यै नमः
ॐ निराधारायै नमः
ॐ निरुपमायै नमः
ॐ नित्य शुद्धायै नमः

ॐ निरंजनायै नमः
ॐ नादबिन्दु कलातीतायै नमः
ॐ नादबिन्दु कलात्मिकायै नमः
ॐ नृसिंहिन्यै नमः
ॐ नगधरायै नमः
ॐ नृपनाग विभूषितायै नमः
ॐ नरक क्लेश शमन्यै नमः
ॐ नारायण पदोद्भवायै नमः
ॐ निरवद्यायै नमः
ॐ निराकारायै नमः
ॐ नारद प्रिय कारिण्यै नमः
ॐ नानाज्योतिः समाख्यातायै नमः
ॐ निधिदायै नमः
ॐ निर्मलात्मिकायै नमः
ॐ नवसूत्र धरायै नमः
ॐ नीत्यै नमः
ॐ निरुपद्रव कारिण्यै नमः
ॐ नन्दजायै नमः
ॐ नवरत्नाढ्यायै नमः
ॐ नैमिषारण्य वासिन्यै नमः
ॐ नवनीत प्रियायै नमः
ॐ नार्यै नमः
ॐ नीलजीमूत निस्वनायै नमः
ॐ निमेषिण्यै नमः
ॐ नदीरूपायै नमः
ॐ नीलग्रीवायै नमः
ॐ निशीश्वर्यै नमः
ॐ नामावल्यै नमः
ॐ निशुंभघ्न्यै नमः
ॐ नागलोक निवासिन्यै नमः
ॐ नवजाम्बूनद प्रख्यायै नमः
ॐ नागलोका ऽ धिदेवतायै नमः
ॐ नूपुराक्रान्त चरणायै नमः
ॐ नरचित्त प्रमोदिन्यै नमः
ॐ निमग्ना रक्त नयनायै नमः
ॐ निर्घात सम निस्वनायै नमः
ॐ नन्दनोद्यान निलयायै नमः
ॐ निर्व्यूहोपरिचारिण्यै नमः
ॐ पार्वत्यै नमः
ॐ परमोदारायै नमः
ॐ परब्रह्मात्मिकायै नमः
ॐ परायै नमः
ॐ पञ्च कोश विनिर्मुक्तायै नमः
ॐ पञ्च पातक नाशिन्यै नमः
ॐ परचित्त विधानज्ञायै नमः
ॐ पञ्चिकायै नमः
ॐ पञ्च रूपिण्यै नमः
ॐ पूर्णिमायै नमः
ॐ परमायै नमः
ॐ प्रीत्यै नमः
ॐ परतेजः प्रकाशिन्यै नमः
ॐ पुराण्यै नमः
ॐ पौरुष्यै नमः
ॐ पुण्यायै नमः
ॐ पुण्डरीक निभेक्षणायै नमः
ॐ पाताल तल निर्मग्नायै नमः
ॐ प्रीतायै नमः
ॐ प्रीति विवर्धिन्यै नमः
ॐ पावन्यै नमः
ॐ पादसहितायै नमः
ॐ पेशलायै नमः
ॐ पवनाशिन्यै नमः
ॐ प्रजापत्यै नमः
ॐ परिश्रान्तायै नमः

ॐ पर्वत स्तन मण्डलायै नमः
ॐ पद्म प्रियायै नमः
ॐ पद्म संस्थायै नमः
ॐ पद्माक्ष्यै नमः
ॐ पद्म संभवायै नमः
ॐ पद्म पत्रायै नमः
ॐ पद्म पदायै नमः
ॐ पद्मिन्यै नमः
ॐ प्रिय भाषिण्यै नमः
ॐ पशुपाश विनिर्मुक्तायै नमः
ॐ पुरन्ध्र्यै नमः
ॐ पुरवासिन्यै नमः
ॐ पुष्कलायै नमः
ॐ पुरुषायै नमः
ॐ पर्वायै नमः
ॐ पारिजात सुमप्रियायै नमः
ॐ पतिव्रतायै नमः
ॐ पवित्रांग्यै नमः
ॐ पुष्पहास परायणायै नमः
ॐ प्रज्ञावती सुतायै नमः
ॐ पौत्र्यै नमः
ॐ पुत्र पूज्यायै नमः
ॐ पयस्विन्यै नमः
ॐ पट्टि पाश धरायै नमः
ॐ पङ्क्त्यै नमः
ॐ पितृ लोक प्रदायिन्यै नमः
ॐ पुराण्यै नमः
ॐ पुण्यशीलायै नमः
ॐ प्रणतार्ति विनाशिन्यै नमः
ॐ प्रद्युम्न जनन्यै नमः
ॐ पुष्टायै नमः
ॐ पितामह परिग्रहायै नमः
ॐ पुण्डरीक पुरा वासायै नमः
ॐ पुण्डरीक समाननायै नमः
ॐ पृथु जङ्घायै नमः
ॐ पृथु भुजायै नमः
ॐ पृथु पादायै नमः
ॐ पृथूदर्यै नमः
ॐ प्रवाल शोभायै नमः
ॐ पिङ्गाक्ष्यै नमः
ॐ पीतवासायै नमः
ॐ प्रचापलायै नमः
ॐ प्रसवायै नमः
ॐ पुष्टिदायै नमः
ॐ पुण्यायै नमः
ॐ प्रतिष्ठायै नमः
ॐ प्रणवागतिः
ॐ पंच वर्णायै नमः
ॐ पंच वाण्यै नमः
ॐ पंचिकायै नमः
ॐ पंचर स्थितायै नमः
ॐ परमायायै नमः
ॐ परज्योत्यै नमः
ॐ परप्रीत्यै नमः
ॐ परागत्यै नमः
ॐ पराकाष्ठायै नमः
ॐ परेशान्यै नमः
ॐ पाविन्यै नमः
ॐ पावकद्युतिः
ॐ पुण्यभद्रायै नमः
ॐ परिच्छेद्यायै नमः
ॐ पुष्पहासायै नमः
ॐ पृथूदर्यै नमः
ॐ पीताङ्ग्यै नमः

ॐ पीतवसनायै नमः
ॐ पीतशय्यायै नमः
ॐ पिशाचिन्यै नमः
ॐ पीतक्रियायै नमः
ॐ पिशाचघ्न्यै नमः
ॐ पाटलाक्ष्यै नमः
ॐ पटुक्रियायै नमः
ॐ पञ्च भक्ष प्रियाचारायै नमः
ॐ पूतना प्राण घातिन्यै नमः
ॐ पुन्नाग वन मध्यस्थायै नमः
ॐ पुण्य तीर्थ निषेवितायै नमः
ॐ पञ्चाङ्ग्यै नमः
ॐ पराशक्त्यै नमः
ॐ परमाह्लाद् कारिण्यै नमः
ॐ पुष्पकाण्ड स्थितायै नमः
ॐ पूषायै नमः
ॐ पोषिताखिल विष्टपायै नमः
ॐ पानप्रियायै नमः
ॐ पञ्च शिखायै नमः
ॐ पन्नगोपरिशायिन्यै नमः
ॐ पञ्च मात्रात्मिकायै नमः
ॐ पृथ्व्यै नमः
ॐ पथिकायै नमः
ॐ पृथु दोहिन्यै नमः
ॐ पुराण न्याय मीमांसायै नमः
ॐ पाटल्यै नमः
ॐ पुष्प गन्धिन्यै नमः
ॐ पुण्य प्रजायै नमः
ॐ पारदात्र्यै नमः
ॐ परमार्गैक गोचरायै नमः
ॐ प्रवाल शोभायै नमः
ॐ पूर्णाशायै नमः
ॐ प्रणवायै नमः
ॐ पल्लवोदर्यै नमः
ॐ फलिन्यै नमः
ॐ फलदायै नमः
ॐ फल्वे नमः
ॐ फूत्कार्यै नमः
ॐ फलकाकृतिः
ॐ फणीन्द्र भोग शयनायै नमः
ॐ फणि मण्डल मण्डितायै नमः
ॐ बालबालायै नमः
ॐ बहुमतायै नमः
ॐ बालातप निभांशुकायै नमः
ॐ बलभद्र प्रियायै नमः
ॐ बन्द्यायै नमः
ॐ बडवायै नमः
ॐ बुद्धि संस्तुतायै नमः
ॐ बन्दीदेव्यै नमः
ॐ बिलवत्यै नमः
ॐ बडिशघ्न्यै नमः
ॐ बलिप्रियायै नमः
ॐ बान्धव्यै नमः
ॐ बाधितायै नमः
ॐ बुद्ध्यै नमः
ॐ बन्धूक कुसुम प्रियायै नमः
ॐ बालभानु प्रभाकारायै नमः
ॐ ब्राह्म्यै नमः
ॐ ब्राह्मण देवतायै नमः
ॐ बृहस्पति स्तुतायै नमः
ॐ बृन्दायै नमः
ॐ बृन्दावन विहारिण्यै नमः
ॐ बालाकिन्यै नमः
ॐ बिलाहारायै नमः

ॐ बिलवासायै नमः
ॐ बहूदकायै नमः
ॐ बहुनेत्रायै नमः
ॐ बहुपदायै नमः
ॐ बहुकर्णा ऽ वतंसिकायै नमः
ॐ बहु बाहु युतायै नमः
ॐ बीज रूपिण्यै नमः
ॐ बहु रूपिण्यै नमः
ॐ बिन्दु नाद कलातीतायै नमः
ॐ बिन्दु नाद स्वरूपिण्यै नमः
ॐ बद्ध गोधाङ्गुलि त्राणायै नमः
ॐ बदर्याश्रम वासिन्यै नमः
ॐ बृन्दारकायै नमः
ॐ बृहत् स्कन्धायै नमः
ॐ बृहत्यै नमः
ॐ बाणपातिन्यै नमः
ॐ वृन्दाध्यक्षायै नमः
ॐ बहुनुतायै नमः
ॐ बनितायै नमः
ॐ बहुविक्रमायै नमः
ॐ बद्ध पद्मासनासीनायै नमः
ॐ बिल्व पत्र तल स्थितायै नमः
ॐ बोधिद्रुम निजावासायै नमः
ॐ बडिस्थायै नमः
ॐ बिन्दु दर्पणायै नमः
ॐ बालायै नमः
ॐ बाणासनवत्यै नमः
ॐ वडवानल वेगिन्यै नमः
ॐ ब्रह्माण्ड बहिरन्तः स्थायै नमः
ॐ ब्रह्म कङ्कण सूत्रिण्यै नमः
ॐ भवान्यै नमः
ॐ भीषणवत्यै नमः
ॐ भाविन्यै नमः
ॐ भयहारिण्यै नमः
ॐ भद्रकाल्यै नमः
ॐ भुजङ्गाक्ष्यै नमः
ॐ भारत्यै नमः
ॐ भारताशयायै नमः
ॐ भैरव्यै नमः
ॐ भीषणाकारायै नमः
ॐ भूतिदायै नमः
ॐ भूतिमालिन्यै नमः
ॐ भामिन्यै नमः
ॐ भोगनिरतायै नमः
ॐ भद्रदायै नमः
ॐ भूरिविक्रमायै नमः
ॐ भूतावासायै नमः
ॐ भृगुलतायै नमः
ॐ भार्गव्यै नमः
ॐ भूसुरार्चितायै नमः
ॐ भागीरथ्यै नमः
ॐ भोगवत्यै नमः
ॐ भवनस्थायै नमः
ॐ भिषग्वरायै नमः
ॐ भामिन्यै नमः
ॐ भोगिन्यै नमः
ॐ भाषायै नमः
ॐ भवान्यै नमः
ॐ भूरिदक्षिणायै नमः
ॐ भर्गात्मिकायै नमः
ॐ भीमवत्यै नमः
ॐ भवबन्ध विमोचिन्यै नमः
ॐ भजनीयायै नमः
ॐ भूतधात्री रञ्जितायै नमः

ॐ भुवनेश्वर्यै नमः
ॐ भुजङ्ग वलयायै नमः
ॐ भीमायै नमः
ॐ भेरुण्डायै नमः
ॐ भागधेयिन्यै नमः
ॐ मात्रे नमः
ॐ मायायै नमः
ॐ मधुमत्यै नमः
ॐ मधुजिह्वायै नमः
ॐ मधुप्रियायै नमः
ॐ महादेव्यै नमः
ॐ महाभागायै नमः
ॐ मालिन्यै नमः
ॐ मीनलोचनायै नमः
ॐ मायातीतायै नमः
ॐ मधुमत्यै नमः
ॐ मधुमांसायै नमः
ॐ मधुद्रवायै नमः
ॐ मानव्यै नमः
ॐ मधुसंभूतायै नमः
ॐ मिथिलापुर वासिन्यै नमः
ॐ मधुकैटभ संहर्त्र्यै नमः
ॐ मेदिन्यै नमः
ॐ मेघ मालिन्यै नमः
ॐ मन्दोदर्यै नमः
ॐ महामायायै नमः
ॐ मैथिल्यै नमः
ॐ मसृण प्रियायै नमः
ॐ महालक्ष्म्यै नमः
ॐ महाकाल्यै नमः
ॐ महाकन्यायै नमः
ॐ महेश्वर्यै नमः

ॐ माहेन्द्यै नमः
ॐ मेरु तनयायै नमः
ॐ मन्दारायै नमः
ॐ कुसुमार्चितायै नमः
ॐ मञ्जु मञ्जीर चरणायै नमः
ॐ मोक्षदायै नमः
ॐ मञ्जु भाषिण्यै नमः
ॐ मधुर द्राविण्यै नमः
ॐ मुद्रायै नमः
ॐ मलयायै नमः
ॐ मलयान्वितायै नमः
ॐ मेधायै नमः
ॐ मरकत श्यामायै नमः
ॐ मागध्यै नमः
ॐ मेनकात्मजायै नमः
ॐ महामार्यै नमः
ॐ महावीरायै नमः
ॐ महाश्यामायै नमः
ॐ मनुस्तुतायै नमः
ॐ मातृकायै नमः
ॐ मिहिराभासायै नमः
ॐ मुकुन्द पद विक्रमायै नमः
ॐ मूलाधार स्थितायै नमः
ॐ मुग्धायै नमः
ॐ मणिपूरक वासिन्यै नमः
ॐ मृगाक्ष्यै नमः
ॐ महिषा ऽ रूढायै नमः
ॐ महिषासुर मर्दिन्यै नमः
ॐ योगासनायै नमः
ॐ योगगम्यायै नमः
ॐ योगायै नमः
ॐ यौवनकाश्रयायै नमः

ॐ यौवन्यै नमः
ॐ युद्ध मध्यस्थायै नमः
ॐ यमुनायै नमः
ॐ युगधारिण्यै नमः
ॐ यक्षिण्यै नमः
ॐ योग युक्तायै नमः
ॐ यक्षराज प्रसूतिन्यै नमः
ॐ यात्रायै नमः
ॐ यानविधानज्ञायै नमः
ॐ यदु वंश समुद्भवायै नमः
ॐ यकारादि हकारान्तायै नमः
ॐ याजुष्यै नमः
ॐ यज्ञ रूपिण्यै नमः
ॐ यामिन्यै नमः
ॐ योगनिरतायै नमः
ॐ यातुधान भयङ्कर्यै नमः
ॐ रुक्मिण्यै नमः
ॐ रमण्यै नमः
ॐ रामायै नमः
ॐ रेवत्यै नमः
ॐ रेणुकायै नमः
ॐ रत्यै नमः
ॐ रौद्र्यै नमः
ॐ रौद्र प्रियाकारायै नमः
ॐ राम मातायै नमः
ॐ रतिप्रियायै नमः
ॐ रोहिण्यै नमः
ॐ राज्यदायै नमः
ॐ रेवायै नमः
ॐ रमायै नमः
ॐ राजीव लोचनायै नमः
ॐ राकेश्यै नमः
ॐ रूप संपन्नायै नमः
ॐ रत्न सिंहासन स्थितायै नमः
ॐ रक्त माल्याम्बर धरायै नमः
ॐ रक्त गन्धानुलेपनायै नमः
ॐ राजहंस समारूढायै नमः
ॐ रम्भायै नमः
ॐ रक्त बलि प्रियायै नमः
ॐ रमणीय युगाधारायै नमः
ॐ राजिता ऽ खिल भूतलायै नमः
ॐ रुरुचर्म परीधानायै नमः
ॐ रथिन्यै नमः
ॐ रत्न मालिकायै नमः
ॐ रोगेश्यै नमः
ॐ रोग शमन्यै नमः
ॐ राविण्यै नमः
ॐ रोम हर्षिण्यै नमः
ॐ रामचन्द्र पदाक्रान्तायै नमः
ॐ रावणच्छेद कारिण्यै नमः
ॐ रत्न वस्त्र परिच्छन्नायै नमः
ॐ रथस्थायै नमः
ॐ रुक्म भूषणायै नमः
ॐ लज्जाधिदेवतायै नमः
ॐ लोलायै नमः
ॐ ललितायै नमः
ॐ लिङ्ग धारिण्यै नमः
ॐ लक्ष्म्यै नमः
ॐ लोलायै नमः
ॐ लुप्तविषायै नमः
ॐ लोकिन्यै नमः
ॐ लोकविश्रुतायै नमः
ॐ लज्जायै नमः
ॐ लम्बोदरी देव्यै नमः

ॐ ललनायै नमः
ॐ लोकधारिण्यै नमः
ॐ वरदायै नमः
ॐ वन्दितायै नमः
ॐ विद्यायै नमः
ॐ वैष्णव्यै नमः
ॐ विमलाकृत्यै नमः
ॐ वाराह्यै नमः
ॐ विरजायै नमः
ॐ वर्षायै नमः
ॐ वरलक्ष्म्यै नमः
ॐ विलासिन्यै नमः
ॐ विनतायै नमः
ॐ व्योम मध्यस्थायै नमः
ॐ वारिजासन संस्थितायै नमः
ॐ वारुण्यै नमः
ॐ वेणु संभूतायै नमः
ॐ वीतिहोत्रायै नमः
ॐ विरूपिण्यै नमः
ॐ वायु मण्डल मध्यस्थायै नमः
ॐ विष्णु रूपायै नमः
ॐ विधि प्रियायै नमः
ॐ विष्णु पत्न्यै नमः
ॐ विष्णु मत्यै नमः
ॐ विशालाक्ष्यै नमः
ॐ वसुन्धरायै नमः
ॐ वामदेव प्रियायै नमः
ॐ वेलायै नमः
ॐ वज्रिण्यै नमः
ॐ वसुदोहिन्यै नमः
ॐ वेदाक्षर परीताङ्ग्यै नमः
ॐ वाजपेय फल प्रदायै नमः
ॐ वासव्यै नमः
ॐ वाम जनन्यै नमः
ॐ वैकुण्ठ निलयायै नमः
ॐ वरायै नमः
ॐ व्यास प्रियायै नमः
ॐ वर्मधरायै नमः
ॐ वाल्मीकि परिसेवितायै नमः
ॐ शाकम्भर्यै नमः
ॐ शिवायै नमः
ॐ शान्तायै नमः
ॐ शरदायै नमः
ॐ शरणागत्यै नमः
ॐ शातोदर्यै नमः
ॐ शुभाचारायै नमः
ॐ शुंभासुर विमर्दिन्यै नमः
ॐ शोभावत्यै नमः
ॐ शिवाकारायै नमः
ॐ शंकरा ऽ र्ध शरीरिण्यै नमः
ॐ शोणायै नमः
ॐ शुभाशयायै नमः
ॐ शुभ्रायै नमः
ॐ शिरः सन्धान कारिण्यै नमः
ॐ शरावत्यै नमः
ॐ शरानन्दायै नमः
ॐ शरज्ज्योत्स्नायै नमः
ॐ शुभाननायै नमः
ॐ शरभायै नमः
ॐ शूलिन्यै नमः
ॐ शुद्धायै नमः
ॐ शबर्यै नमः
ॐ शुक वाहनायै नमः
ॐ श्रीमत्यै नमः

ॐ श्रीधरानन्दायै नमः
ॐ श्रवणानन्द दायिन्यै नमः
ॐ शर्वाण्यै नमः
ॐ शर्वरी वन्द्यायै नमः
ॐ षड् भाषायै नमः
ॐ षड् ऋतु प्रियायै नमः
ॐ षडाधार स्थिता देव्यै नमः
ॐ षण्मुख प्रिय कारिण्यै नमः
ॐ षडंग रूप सुमत्यै नमः
ॐ सुरासुर नमस्कृतायै नमः
ॐ सरस्वत्यै नमः
ॐ सदाधारायै नमः
ॐ सर्व मङ्गल कारिण्यै नमः
ॐ सामगान प्रियायै नमः
ॐ सूक्ष्मायै नमः
ॐ सावित्र्यै नमः
ॐ साम संभवायै नमः
ॐ सर्वावासायै नमः
ॐ सदानन्दायै नमः
ॐ सुस्तन्यै नमः
ॐ सागराम्बरायै नमः
ॐ सर्वैश्वर्य प्रियायै नमः
ॐ सिद्धी साधु बन्धु पराक्रमायै नमः
ॐ सप्तर्षि मण्डल गतायै नमः
ॐ सोम मण्डल वासिन्यै नमः

ॐ सर्वज्ञायै नमः
ॐ सान्द्रकरुणायै नमः
ॐ समानाधिक वर्जितायै नमः
ॐ सर्वोत्तुङ्गायै नमः
ॐ सङ्गहीनायै नमः
ॐ सद्गुणा सकलेष्टदायै नमः
ॐ सरघायै नमः
ॐ सूर्य तनयायै नमः
ॐ सुकेश्यै नमः
ॐ सोम संहतिः
ॐ हिरण्य वर्णायै नमः
ॐ हरिण्यै नमः
ॐ ह्रींकार्यै नमः
ॐ हंस वाहिन्यै नमः
ॐ क्षौम वस्त्र परीताङ्ग्यै नमः
ॐ क्षीराब्धि तनयायै नमः
ॐ क्षमायै नमः
ॐ गायत्र्यै नमः
ॐ सावित्र्यै नमः
ॐ पार्वत्यै नमः
ॐ सरस्वत्यै नमः
ॐ वेदगर्भायै नमः
ॐ वरारोहायै नमः
ॐ श्रीगायत्र्यै नमः
ॐ पराम्बिकायै नमः

॥ इति श्रीदेवी भागवत महापुराणे द्वादश स्कन्धे
गायत्री सहस्त्रनाम स्तोत्रम् सम्पूर्णम् ॥



# ॥ श्री गायत्री सहस्रनाम स्तोत्रम् (श्री रुद्र यामळम्) ॥

## Sri Gayatri Sahasranamam (2) – Rudra Yamalam

This is another Sahasranama (1008 Names) Stotram of Sri. Gayatri taken from Rudra Yamalam. The greatness of this stotram can be understood from the extensive Phalashruti given at the end. Lord Shiva declares that chanting this Sahasranama is equivalent to chanting Seven Crores of various Maha Mantras, chanting Rudram crores of times, donating thousand crores of cows and performing Ashwa Medha Yaga one crore times.

कैलासे सुखमासीनं तुषारकर शेखरम् ।
पत्ताङ्जलिर् नमस्कृत्वा ऽ प्यर्च्य पृच्छति पार्वती ॥ १ ॥

पार्वत्युवाच ।

किं विन्यस्तं त्वया देव स्वशरीरे निरन्तरम् ।
कथ मेधादृशी कान्तिः कथं तेष्टाः समृद्धयः ॥ २ ॥

सर्व तत्त्व प्रभुत्वं च कथंकार मताश्रयेत् ।
कृपया ब्रूहि देवेश प्रसन्नोसि यदि प्रभो ॥ ३ ॥

भगवन् विविधा विद्याः श्रोतुं इच्छामि ते प्रभो ।
यद्यहं प्रेयसी भार्या यद्यहं प्राण वल्लभा ॥ ४ ॥

इदानीं श्रोतुं इच्छामि गायत्र्याः महिमोज्ज्वलम् ।
नाम्नां सहस्रम् देवेश कृपया वक्तुमर्हसि ॥ ५ ॥

इति शृत्वा वचो देव्याः प्रसन्नः प्रभुरीश्वरः ।
श्रूयतां इति चा ऽ भाष्य जगात जगताम्बिकाम् ॥ ६ ॥

ईश्वर उवाच ।

श्रुणु देवी रहस्यं मे तस्या ऽ प्यग्रे न वाचयेत् ।
गोपितं सर्व तन्त्रेषु सिद्धितम् स्तोत्रं उत्तमम् ॥ ७ ॥

सर्व सौभाग्य जनकं सर्व संपत्ति दायकम् ।
सर्व वश्यकरं लोके सर्व प्रत्यूह नाशनम् ॥ ८ ॥

सर्ववादि मुखस्तम्पि निग्रहा ऽ नुग्रह क्षमम् ।
त्वत् प्रीत्या कथयिष्यामि सुगोप्यं अपि दुर्लभम् ॥ ९ ॥

सर्व पाप क्षय करं सर्व ज्ञान मयं शिवम् ।
पारायणानां परमा परब्रह्म स्वरूपिणी ॥ १० ॥

परा च परमेशानी परब्रह्मा ऽ त्मिका मता ।
सा देवी च वरारोहा चेतसा चिन्तयाम्यहं ॥ ११ ॥

ऐश्वर्य पद निश्रेणिः वरदादि स्वरूपिणी ।
गायत्र्या दिव्य साहस्त्रं स्वप्ने चा ऽ प्तम् मम प्रियम् ॥ १२ ॥

ऋषिर् अस्य समाख्यातो महदेवो महेश्वरः ।
देवता वेदजननी छन्दस् सामादि कीर्तितम् ॥ १३ ॥

धर्मा ऽ र्थ काम मोक्षार्थे विनियोग उदाहृदः ।
सर्व भूतान्तरीं ध्यात्वा पद्मासन गतां शुचिः ॥ १४ ॥

ततस् सहस्त्र नामेतं पठितव्यं मुमुक्षुभिः ।
सर्व कार्य करं पुण्यं महा पादक नाशनम् ॥ १५ ॥

**विनियोगः ॥**

अस्य श्री गायत्री सहस्त्रनाम स्तोत्र महामन्त्रस्य। श्री महादेवो महेश्वर ऋषिः। सामादि छन्दः। वेदजननी श्री गायत्री देवता। धर्मा ऽ र्थ काम मोक्षा ऽ र्थे जपे विनियोगः ॥

**ध्यानम् ॥**

**रक्त श्वेत हिरण्य नील दवळैर् युक्तां त्रिनेत्रोज्ज्वलाम् ।**
**रक्तां रक्त नवस्त्रजं मणी गणैर् युक्तां कुमारीं इमाम् ।**
**गायत्रीं कमलासनां कर तल व्यानद्ध कुण्डाम्बुजां ।**
**पद्माक्षीं च वरस्त्रजं च दधतीं हंसाधिरूढां भजे ॥**

## ॥ श्री गायत्री सहस्रनाम स्तोत्रम् ॥

तत्काररूपा तत्त्वज्ञा तत्पदार्थ स्वरूपिणी ।
तपस् स्वाध्याय निरता तपस्वि जन सन्नुता ॥ १ ॥

तत्कीर्ति गुण सम्पन्ना तथ्यवाक् च तपोनिधिः ।
तत्त्वोपदेश संबन्धा तपोलोक निवासिनी ॥ २ ॥

तरुणादित्य संकाशा तप्त कांचन भूषणा ।
तमो ऽ पहारिणी तन्त्री तारिणी तार रूपिणी ॥ ३ ॥

तलादि भुवनानन्तस्था तर्क शास्त्र विधायिनी ।
तन्त्रसारा तन्त्रमाता तन्त्रमार्ग प्रदर्शिनी ॥ ४ ॥

तत्त्वा तन्त्र विधानज्ञा तन्त्रस्था तन्त्र साक्षिणी ।
तदेक ध्यान निरता तत्त्व ज्ञान प्रबोधिनी ॥ ५ ॥

तन्नाम मन्त्र सुप्रीता तपस्वि जन सेविता ।
सकार रूपा सावित्री सर्व रूपा सनातनी ॥ ६ ॥

संसार दुःख शमनी सर्व याग फलप्रदा ।
सकला सत्य संकल्पा सत्या सत्य प्रदायिनी ॥ ७ ॥

संतोष जननी सारा सत्यलोक निवासिनी ।
समुद्र तनया ऽ राध्या सामगान प्रिया सती ॥ ८ ॥

समाना सामदेवी च समस्त सुर सेविता ।
सर्व सम्पत्ति जननी सद्गुणा सकलेष्टदा ॥ ९ ॥

सनकादि मुनि ध्येया समाना ऽ धिक वर्जिता ।
साध्या सिद्धा सुधावासा सिद्धिः साध्य प्रदायिनी ॥ १० ॥

संयुका ऽ राध्य निलया समुत्तीर्णा सदाशिवा ।
सर्व वेदान्त निलया सर्व शास्त्रा ऽ र्थ गोचरा ॥ ११ ॥

सहस्र दल पद्मस्था सर्वज्ञा सर्वतोमुखी ।
समया समयाचारा सद सद् ग्रन्थि भेदिनी ॥ १२ ॥

सप्त कोटि महामन्त्र माता सर्व प्रदायिनी ।
सगुणा संभ्रमा साक्षा सर्व चैतन्य रूपिणी ॥ १३ ॥

सत्कीर्तिः सात्त्विकी साध्वी सच्चिदानन्द रूपिणी ।
संकल्प रूपिणी सन्ध्या सालग्राम निवासिनी ॥ १४ ॥

सर्वोपाधि विनिर्मुक्ता सत्य ज्ञान प्रबोधिनी ।
विकार रूपा विप्रश्रीर् विप्रा ऽ राधन तत्परा ॥ १५ ॥

विप्र प्रीर् विप्र कल्याणी विप्र वाक्य स्वरूपिणी ।
विप्र मन्दिर मध्यस्था विप्र वाद विनोदिनी ॥ १६ ॥

विप्रोपाधि विनिर्भेत्री विप्रहत्या विमोचनी ।
विप्र त्रात्री विप्र गोत्रा विप्र गोत्र विर्वर्धिनी ॥ १७ ॥

विप्र भोजन संतुष्टा विष्णु रूपा विनोदिनी ।
विष्णु माया विष्णु वन्द्या विष्णु गर्भा विचित्रिणी ॥ १८ ॥

वैष्णवी विष्णु भगिनी विष्णु माया विलासिनी ।
विकार रहिता विश्व विज्ञान घन रूपिणी ॥ १९ ॥

विबुधा विष्णु संकल्पा विश्वामित्र प्रसादिनी ।
विष्णु चैतन्य निलया विष्णुस्वा विश्व साक्षिणी ॥ २० ॥

विवेकिनी वियद्रूपा विजया विश्व मोहिनी ।
विद्याधरी विधानज्ञा वेद तत्त्वा ऽ र्थ रूपिणी ॥ २१ ॥

विरूपाक्षी विराड् रूपा विक्रमा विश्व मंगला ।
विश्वंभरा समाराध्या विश्व भ्रमण कारिणी ॥ २२ ॥

विनायकी विनोदस्था वीरगोष्ठी विर्वर्धिनी ।
विवाह रहिता विन्ध्या विन्ध्याचल निवासिनी ॥ २३ ॥

विद्या विद्याकरी विद्या विद्या ऽ विद्या प्रबोधिनी ।
विमला विभवा वेद्या विश्वस्था विविधोज्ज्वला ॥ २४ ॥

वीरमध्या वरारोहा वितन्त्रा विश्व नायिका।
वीरहत्या प्रशमनी विनम्रजन पालिनी ॥ २५ ॥

वीरधीर् विविधाकारा विरोधि जन नाशिनी।
तुकार रूपा तुर्यश्रीः तुलसी वन वासिनी ॥। २६ ॥

तुरंगी तुरगा ऽ रूढा तुलादान फलप्रदा।
तुलामाघ स्नान तुष्टा तुष्टि पुष्टि प्रदायिनी ॥ २७ ॥

तुरंगम प्रसंतुष्टा तुलिता तुल्य मध्यगा।
तुंगोत्तुंगा तुंग कुचा तुहिनाचल संस्थिता ॥ २८ ॥

तुम्बुरादि स्तुति प्रीता तुषार शिखरीश्वरी।
तुष्टा च तुष्टि जननी तुष्ट लोक निवासिनी ॥ २९ ॥

तुलाधारा तुला मध्या तुलस्था तुर्य रूपिणी।
तुरीय गुण गम्भीरा तूर्य नाद स्वरूपिणी ॥ ३० ॥

तूर्य विद्या लास्य तुष्टा तूर्य शास्त्रार्थ वादिनी।
तुरीय शास्त्र तत्त्वज्ञा तूर्य वाद विनोदिनी ॥ ३१ ॥

तूर्य नादान्त निलया तूर्यानन्द स्वरूपिणी।
तुरीय भक्ति जननी तुर्य मार्ग प्रदर्शिनी ॥ ३२ ॥

वकार रूपा वागीशी वरेण्या वरसंविधा।
वरा वरिष्ठा वैदेही वेद शास्त्र प्रदर्शिनी ॥ ३३ ॥

विकल्प शमनी वाणी वाञ्छिताऽ र्थ फलप्रदा।
वयस्था च वयो मध्या वयो ऽ वस्था विर्वजिता ॥ ३४ ॥

वन्दिनी वादिनी वर्या वाङ्ग्मयी वीर वन्दिता।
वान प्रस्थाश्रमस्था च वनदुर्गा वनालया ॥ ३५ ॥

वनजाक्षी वनचरी वनिता विश्व मोहिनी।
वसिष्ठ वाम देवादि वन्द्या वन्द्य स्वरूपिणी ॥ ३६ ॥

वैद्या वैद्य चिकित्सा च वषट्कारी वसुन्धरा ।
वसुमाता वसुत्राता वसु जन्म विमोचनी ॥ ३७ ॥

वसुप्रदा वासुदेवी वासुदेव मनोहरी ।
वासवा ऽ र्चित पादश्रीर् वासवारि विनाशिनी ॥ ३८ ॥

वागीशी वाङ् मनस्था च वशिनी वनवासभूः ।
वामदेवी वरारोहा वाद्य घोषण तत्परा ॥ ३९ ॥

वाचस्पति समाराध्या वेदमाता विनोदिनी ।
रेकार रूपा रेवा च रेवातीर निवासिनी ॥ ४० ॥

राजीव लोचना रामा रागिणी रति वन्दिता ।
रमणी राम जप्ता च राज्यपा रजताद्रिगा ॥ ४१ ॥

राकिणी रेवती रक्षा रुद्र जन्मा रजस्वला ।
रेणुका रमणी रम्या रति वृद्धा रता रतिः ॥ ४२ ॥

रावणानन्त सन्धायी राजश्री राज शेखरी ।
रणमध्या रथा ऽ रूढा रवि कोटि सम प्रभा ॥ ४३ ॥

रवि मण्डल मध्यस्था रजनी रवि लोचना ।
रथांग पाणी रक्षोघ्नी रागिणी रावणा ऽ र्चिता ॥ ४४ ॥

रंभादि कन्यका ऽ राध्या राज्यदा राज्य वर्धिनी ।
रजताद्रीश सक्तिस्था रम्या राजीव लोचना ॥ ४५ ॥

रम्य वाणी रमा ऽ राध्या राज्य धात्री रतोत्सवा ।
रेवती च रतोत्साहा राजहृद् रोग हारिणी ॥ ४६ ॥

रंग प्रवृद्ध मधुरा रंग मण्डप मध्यगा ।
रञ्जिता राज जननी रम्या राकेन्दु मध्यगा ॥ ४७ ॥

राविणी रागिणी रञ्ज्या राजराजेश्वरा ऽ र्चिता ।
राजन्वती राजनीती रजताचल वासिनी ॥ ४८ ॥

राघवा ऽ र्चित पादश्रीः राघवा राघव प्रिया ।
रत्न सागर मध्यस्था रत्न द्वीप निवासिनी ॥ । ४९ ॥

रत्न प्राकार मध्यस्था रत्न मण्डप मध्यगा ।
रत्ना ऽ भिषेक सन्तुष्टा रत्नांगी रत्न दायिनी ॥ ५० ॥

णिकार रूपिणी नित्या नित्य तृप्ता निरञ्जना ।
निद्रात्यय विशेषज्ञा नील जीमूत सन्निभा ॥ ५१ ॥

नीवारशूकवत् तन्वी नित्य कल्याण रूपिणी ।
नित्योत्सवा नित्य पूज्या नित्यानन्द स्वरूपिणी ॥ ५२ ॥

निर्विकल्पा निर्गुणस्था निश्चिन्ता निरुपद्रवा ।
निस्संशया निरीहा च निर्लोभा नीलमूर्धजा ॥ ५३ ॥

निखिलागम मध्यस्था निखिलागम संस्थिता ।
नित्योपाधि विनिर्मुक्ता नित्यकर्म फलप्रदा ॥ ५४ ॥

नीलग्रीवा निराहारा निरञ्जन वरप्रदा ।
नवनीत प्रिया नारी नरकार्णव तारिणी ॥ ५५ ॥

नारायणी निरीहा च निर्मला निर्गुण प्रिया ।
निश्चिन्ता निगमाचारा निखिलागम वेदिनी ॥ ५६ ॥

निमेषा निमिषोत्पन्ना निमेषाण्ड विधायिनी ।
निवात दीप मध्यस्था निर्विघ्ना नीच नाशिनी ॥ ५७ ॥

नीलवेणी नीलकण्ठा निर्विषा निष्कशोभिता ।
नीलांशुक परीधाना निन्द्यघ्नी च निरीश्वरी ॥ ५८ ॥

निश्वासोच्छ्वास मध्यस्था नित्यं यान विलासिनी ।
यम्काररूपा यन्त्रेशी यन्त्री यन्त्रा यशस्विनी ॥ ५९ ॥

यन्त्रा ऽ राधन संतुष्टा यजमान स्वरूपिणी ।
योगि पूज्या यकारस्था यूपस्तंभ निवासिनी ॥ ६० ॥

यमघ्नी यम कल्पा च यशः कामा यतीश्वरी ।
यमादि योग निरता यति दुःखा ऽ पहारिणी ॥ ६१ ॥

यज्ञा यज्वा यजुर्गेया यज्ञेश्वर पतिव्रता ।
यज्ञ सूत्र प्रदा यष्ट्री यज्ञ कर्म फलप्रदा ॥ ६२ ॥

यवांकुर प्रिया यन्त्री यवदघ्नी यवा ऽ र्चिता ।
यज्ञ कर्त्री यज्ञ भोक्त्री यज्ञा ऽ ङ्गी यज्ञ वाहिनी ॥ ६३ ॥

यज्ञ साक्षी यज्ञ मुखी यजुषी यज्ञ रक्षणी ।
भकार रूपा भद्रेशी भद्र कल्याण दायिनी ॥ ६४ ॥

भक्त प्रिया भक्त सखा भक्ता ऽ भीष्ट स्वरूपिणी ।
भगिनी भक्ति सुलभा भक्तिदा भक्त वत्सला ॥ ६५ ॥

भक्त चैतन्य निलया भक्त बन्ध विमोचनी ।
भक्त स्वरूपिणी भाग्या भक्ता ऽ रोग्य प्रदायिनी ॥ ६६ ॥

भक्त माता भक्त गम्या भक्ता ऽ भीष्ट प्रदायिनी ।
भास्करी भैरवी भोग्या भवानी भय नाशिनी ॥ ६७ ॥

भद्रा ऽ त्मिका भद्र दायी भद्रकाली भयंकरी ।
भगनिष्यन्दिनी भूम्नी भव बन्ध विमोचनी ॥ ६८ ॥

भीमा भवसखा भंगी भंगुरा भीम दर्शिनी ।
भल्ली भल्लीधरा भीरुः भेरूण्डा भीमपापहा ॥ ६९ ॥

भावज्ञा भोग दात्री च भवघ्नी भूति भूषणा ।
भूतिदा भूमि दात्री च भूपतित्व प्रदायिनी ॥ ७० ॥

भ्रामरी भ्रमरी भारी भव सागर तारिणी ।
भण्डासुर वधोत्साहा भाग्यदा भावनोदिनी ॥ ७१ ॥

गोकार रूपा गोमाता गुरुपत्नी गुरुप्रिया ।
गोरोचन प्रिया गौरी गोविन्द गुण वर्धिनी ॥ ७२ ॥

गोपाल चेष्टा संतुष्टा गोवर्धन विर्वधिनी ।
गोविन्द रूपिणी गोप्त्री गोकुलानन्द विर्वधिनी ॥ ७३ ॥

गीता गीतप्रिया गेया गोदा गोरूप धारिणी ।
गोप्त्री गोहत्य शमनी गुणिनी गुण विग्रहा ॥ ७४ ॥

गोविन्द जननी गोष्ठा गोप्रदा गोकुलोत्सवा ।
गोचरी गौतमी गङ्गा गोमुखी गुरु वासिनी ॥ ७५ ॥

गोपाली गोमयी गुंफा गोष्ठी गोपुर वासिनी ।
गरूडा गमन श्रेष्ठा गारुडा गरुड ध्वजा ॥ ७६ ॥

गंभीरा गण्डकी गुंफा गरुड ध्वज वल्लभा ।
गगनस्था गयावासा गुणवृद्धिर् गुणोद्भवा ॥ ७७ ॥

देकार रूपा देवेशी दृग् रूपा देवता ऽ र्चिता ।
देवराजेश्वरा ऽ र्धाङ्गी दीन दैन्य विमोचनी ॥ ७८ ॥

देशकाल परिज्ञाना देशोपद्रव नाशिनी ।
देवमाता देवमोहा देव दानव मोहिनी ॥ ७९ ॥

देवेन्द्रा ऽ र्चित पादश्रीर् देवदेव प्रसादिनी ।
देशान्तरी देशरूपा देवालय निवासिनी ॥ ८० ॥

देश भ्रमण संतुष्टा देशस्वास्थ्य प्रदायिनी ।
देवयाना देवता च देव सैन्य प्रपालिनी ॥ ८१ ॥

वकार रूपा वाग्देवी वेद मानस गोचरा ।
वैकुण्ठ देशिका वेद्या वायु रूपा वर प्रदा ॥ ८२ ॥

वक्रतुण्डा ऽ र्चित पदा वक्रतुण्ड प्रसादिनी ।
वैचित्र्य रूपा वसुधा वसुस्थाना वसु प्रिया ॥ ८३ ॥

वषट्कार स्वरूपा च वरारोहा वरासना ।
वैदेही जननी वेद्या वैदेही शोक नाशिनी ॥ ८४ ॥

वेदमाता वेदकन्या वेदरूपा विनोदिनी ।
वेदान्त वादिनी चैव वेदान्त निलय प्रिया ॥ ८५ ॥

वेदश्रवा वेदघोषा वेदगीता विनोदिनी ।
वेदशास्त्रा ऽ र्थ तत्त्वज्ञा वेदमार्ग प्रदर्शिनी ॥ ८६ ॥

वेदोक्त कर्म फलदा वेदसागर बाडबा ।
वेदवन्द्या वेदगुह्या वेदा ऽ श्व रथ वाहिनी ॥ ८७ ॥

वेदचक्रा वेदवन्द्या वेदांगी वेदवित् कविः ।
स्यकार रूपा सामन्ता सामगान विचक्षणा ॥ ८८ ॥

साम्राज्ञी साम रूपा च सदानन्द प्रदा तथा ।
सर्व दृक् सन्निविष्टा च सर्व सम्प्रेषिणी सहा ॥ ८९ ॥

सव्यापसव्यदा सव्या सध्रीची च सहायिनी ।
सकला सागरा सारा सार्व भौम स्वरूपिणी ॥ ९० ॥

संतोष जननी सेव्या सर्वेशी सर्व रञ्जनी ।
सरस्वती समाराध्या सामदा सिन्धु सेविता ॥ ९१ ॥

संमोहिनी सदामोहा सर्व मांगल्य दायिनी ।
समस्त भुवनेशानी सर्व काम फल प्रदा ॥ ९२ ॥

सर्व सिद्धि प्रदा साध्वी सर्व ज्ञान प्रदायिनी ।
सर्व दारिद्रय शमनी सर्व दुःख विमोचनी ॥ ९३ ॥

सर्व रोग प्रशमनी सर्व पाप विमोचनी ।
सम दृष्टिः सम गुणा सर्व गोप्त्री सहायिनी ॥ ९४ ॥

सामर्थ्य वाहिनी साङ्ख्या सान्द्रानन्द पयोधरा ।
संकीर्ण मन्दिर स्थाना साकेत कुल पालिनी ॥ ९५ ॥

संहारिणी सुधा रूपा साकेत पुर वासिनी ।
संबोधिनी समस्तेशी सत्य ज्ञान स्वरूपिणी ॥ ९६ ॥

संपत्करी समानांगी सर्व भाव सुसंस्थिता ।
सन्ध्या वन्दन सुप्रीता सन्मार्ग कुल पालिनी ॥ ९७ ॥

सञ्जीविनी सर्व मेधा सभ्या साधु सुपूजिता ।
समिद्धा सामिधेनी च सामान्या साम वेदिनी ॥ ९८ ॥

समुत्तीर्णा सदाचारा संहारा सर्व पावनी ।
सर्पिणी सर्प माता च सावदाना सुख प्रदा ॥ ९९ ॥

सर्व रोग प्रशमनी सर्वज्ञत्व फल प्रदा ।
संक्रमा समदा सिन्धुः सर्गादि करण क्षमा ॥ १०० ॥

संकटा संकट हरा सकुंकुम विलेपना ।
सुमुखी सुमुख प्रीता समानाधिक वर्जिता ॥ १०१ ॥

संस्तुता स्तुति सुप्रीता सत्यवादी सदास्पदा ।
धीकार रूपा धीमाता धीरा धीर प्रसादिनी ॥ १०२ ॥

धीरोत्तमा धीरधीरा धीरस्था धीर शेखरा ।
धृति रूपा धनाढया च धनपा धन दायिनी ॥ १०३ ॥

धी रूपा धीर वन्द्या च धीप्रभा धीर मानसा ।
धीगेया धीपदस्था च धीशाना धी प्रसादिनी ॥ १०४ ॥

मकार रूपा मैत्रेया महा मंगल देवता ।
मनोवैकल्य शमनी मलयाचल वासिनी ॥ १०५ ॥

मलय ध्वज राजश्रीः माया मोह विभेदिनी ।
महादेवी महारूपा महाभैरव पूजिता ॥ १०६ ॥

मनु प्रीता मन्त्र मूर्तिर् मन्त्र वश्या महेश्वरी ।
मत्त मातंग गमना मधुरा मेरु मण्डपा ॥ १०७ ॥

महागुप्ता महाभूत महाभय विनाशिनी ।
महाशौर्या मन्त्रिणी च महावैरि विनाशिनी ॥ १०८ ॥

महालक्ष्मीर् महागौरी महिषासुर मर्दिनी ।
महेश मण्डलस्था च मधुरागम पूजिता ॥ १०९ ॥

मेधा मेधाकरी मेध्या माधवी मधु मर्दिनी ।
मन्त्रा मन्त्रमयी मान्या माया माधव मन्त्रिणी ॥ ११० ॥

मायादूरा च माया ऽ ढ्या मायाज्ञा मान दायिनी ।
माया संकल्प जननी मायामय विनोदिनी ॥ १११ ॥

माया प्रपंच शमनी माया संहार रूपिणी ।
माया मन्त्र प्रसादा च मायाजन विमोहिनी ॥ ११२ ॥

महापथा महाभोगा महाविघ्न विनाशिनी ।
महानुभावा मन्त्राढया महामंगल देवता ॥ ११३ ॥

हिकार रूपा हृद्या च हितकार्य प्रर्वधिनी ।
हेयोपाधि विनिर्मुक्ता हीन लोक विनाशिनी ॥ ११४ ॥

ह्रींकारी ह्रीमतिर् हृद्या ह्रीं देवी ह्रीं स्वभाविनी ।
ह्रीं मंदिरा हितकरी हृष्टा च ह्रीं कुलोद्भवा ॥ ११५ ॥

हितप्रज्ञा हितप्रीता हितकारुण्य वर्धिनी ।
हिताशिनी हितक्रोधा हितकर्म फलप्रदा ॥ ११६ ॥

हिमा हैमवती हैम्नी हेमाचल निवासिनी ।
हिमागजा हितकरी हितकर्म स्वभाविनी ॥ ११७ ॥

धीकार रूपा धिषणा धर्म रूपा धनेश्वरी ।
धनुर्धरा धराधारा धर्म कर्म फल प्रदा ॥ ११८ ॥

धर्माचारा धर्मसारा धर्म मध्य निवासिनी ।
धनुर् विद्या धनुर् वेदा धन्या धूर्त विनाशिनी ॥ ११९ ॥

धन धान्या धेनु रूपा धनाढ्या धन दायिनी ।
धनेशी धर्म निरता धर्मराज प्रसादिनी ॥ १२० ॥

धर्म स्वरूपा धर्मेशी धर्मा ऽ धर्म विचारिणी ।
धर्म सूक्ष्मा धर्म गेहा धर्मिष्ठा धर्म गोचरा ॥ १२१ ॥

योकार रूपा योगेशी योगस्था योग रूपिणी ।
योग्य योगीश वरदा योग मार्ग निवासिनी ॥ १२२ ॥

योगसनस्था योगेशी योग माया विलासिनी ।
योगिनी योग रक्ता च योगांगी योग विग्रहा ॥ १२३ ॥

योग वासा योग भोग्या योग मार्ग प्रदर्शिनी ।
योकार रूपा योधा ऽ ढ्या योद्ध्री योधसु तत्परा ॥ १२४ ॥

योगिनी योगिनी सेव्या योग ज्ञान प्रबोधिनी ।
योगीश्वर प्राण नाथा योगीश्वर हृदि स्थिता ॥ १२५ ॥

योगा योगक्षेम कर्त्री योगक्षेम विधायिनी ।
योग राजेश्वरा ऽ राध्या योगानन्द स्वरूपिणी ॥ १२६ ॥

नकार रूपा नादेशी नाम पारायण प्रिया ।
नव सिद्धि समा ऽ राध्या नारायण मनोहरी ॥ १२७ ॥

नारायणी नवाधारा नवब्रह्मा ऽ र्चितांघ्रिका ।
नगेन्द्र तनया ऽ राध्या नाम रूप विवर्जिता ॥ १२८ ॥

नरसिंहा ऽ र्चित पदा नवबन्ध विमोचनी ।
नवग्रहा ऽ र्चित पदा नवमी पूजन प्रिया ॥ १२९ ॥

नैमित्तिका ऽ र्थ फलदा नन्दितारि विनाशिनी ।
नवपीठ स्थिता नादा नवर्षि गण सेविता ॥ १३० ॥

नवसूत्र विधानज्ञा नैमिशारण्य वासिनी ।
नवचन्दन दिग्धांगी नवकुंकुम धारिणी ॥ १३१ ॥

नववस्त्र परीधाना नवरत्न विभूषणा ।
नव्य भस्म विदिग्धांगी नवचन्द्र कलाधरा ॥ १३२ ॥

प्रकार रूपा प्राणेशी प्राण संरक्षणी परा ।
प्राण सञ्जीविनी प्राच्या प्राणिः प्राण प्रबोधिनी ॥ १३३ ॥

प्रज्ञा प्राज्ञा प्रभा पुष्पा प्रतीची प्रबुध प्रिया ।
प्राचीना प्राणि चित्तस्था प्रभा प्रज्ञान रूपिणी ॥ १३४ ॥

प्रभात कर्म सन्तुष्टा प्राणायाम परायणा ।
प्रायज्ञा प्रणवा प्राणा प्रवृत्तिः प्रकृतिः परा ॥ १३५ ॥

प्रबन्धा प्रथमा चैव प्रज्ञा प्रारब्ध नाशिनी ।
प्रबोध निरता प्रेक्ष्या प्रबन्धा प्राण साक्षिणी ॥ १३६ ॥

प्रयाग तीर्थ निलया प्रत्यक्ष परमेश्वरी ।
प्रणवाद्यन्त निलया प्रणवादिः प्रजेश्वरी ॥ १३७ ॥

चोकार रूपा चोरघ्नी चोर बाधा विनाशिनी ।
चैतन्या चेतनस्था च चतुरा च चमत्कृतिः ॥ १३८ ॥

चक्रवर्ति कुला ऽ धारा चक्रिणी चक्र धारिणी ।
चित्तगेया चिदानन्दा चिद्रूपा चिद्विलासिनी ॥ १३९ ॥

चिन्ता चित्त प्रशमनी चिन्तितार्थ फलप्रदा ।
चाम्पेयी चम्पक प्रीता चण्डी चण्डाट्टहासिनी ॥ १४० ॥

चण्डेश्वरी चण्डमाता चण्ड मुण्ड विनाशिनी ।
चकोराक्षी चिरप्रीता चिकुरा चिकुरालका ॥ १४१ ॥

चैतन्य रूपिणी चैत्री चेतना चित्त साक्षिणी ।
चित्रा चित्र विचित्रांगी चित्रगुप्त प्रसादिनी ॥ १४२ ॥

चलना चक्र संस्था च चाम्पेयी चलचित्रिणी ।
चन्द्र मण्डल मध्यस्था चन्द्र कोटि सुशीतला ॥ १४३ ॥

चन्द्रानुज समाराध्या चन्द्रा चन्द्र सहोदरी ।
चर्चितारिश् चन्द्रमाता चन्द्रकान्ता चलेश्वरी ।१४४ ॥

चराचर निवासा च चक्रपाणि सहोदरी।
दकार रूपा दत्तश्रीः दारिद्य च्छेद कारिणी ॥ १४५ ॥

दत्तात्रेयस्य वरदा दरांगी दीन वत्सला।
दक्षा ऽ राध्या दक्ष कन्या दक्ष यज्ञ विनाशिनी ॥ १४६ ॥

दक्षा दाक्षायणी दीक्षा दृष्टा दक्ष वरप्रदा।
दक्षिणा दक्षिणा ऽ राध्या दक्षिणामूर्ति रूपिणी ॥ १४७ ॥

दयावती दमस्वान्ता दनुजारिर् दयानिधिः।
दन्त शोभा निभा देवी दमनी दाडिमस्तना ॥ १४८ ॥

दण्डा च दमयित्री च दण्डिनी दमन प्रिया।
दण्डका ऽ रण्य निलया दण्डकारि विनाशिनी ॥ १४९ ॥

दंष्ट्रा कराल वदना दण्ड शोभा दरोदरी।
दरिद्रा ऽ रिष्ट शमनी दम्या दमन पूजिता ॥ १५० ॥

दानवा ऽ र्चित पादश्रीः द्रविणा द्राविणी दया।
दामोदरी दानवारिः दामोदर सहोदरी ॥ १५१ ॥

दात्री दानप्रिया दाम्नी दानश्रीः द्विज वन्दिता।
दन्तिगा दण्डिनी दूर्वा दधि दुग्ध स्वरूपिणी ॥ १५२ ॥

दाडिमी बीज संदोह दन्त पङ्क्ति विराजिता।
दर्पणा दर्पण स्वच्छा द्रुम मण्डल वासिनी ॥ १५३ ॥

दशावतार जननी दश दिग् दैव पूजिता।
दमा दशदिशा दृश्या दशदासी दयानिधिः ॥ १५४ ॥

देशकाल परिज्ञाना देशकाल विशोधिनी।
दशम्यादि कला ऽ राध्या दशग्रीव विरोधिनी ॥ १५५ ॥

दशा ऽ पराध शमनी दश वृत्ति फलप्रदा।
यात्कार रूपिणी याज्ञी यादवी यादवा ऽ र्चिता ॥ १५६ ॥

ययाति पूजन प्रीता याज्ञिकी याजक प्रिया ।
यजमाना यदु प्रीता याम पूजा फलप्रदा ॥ १५७ ॥

यशस्विनी यमा ऽ राध्या यमकन्या यतीश्वरी ।
यमादि योग सन्तुष्टा योगीन्द्र हृदया यमा ॥ १५८ ॥

यमोपाधि विनिर्मुक्ता यशस्य विधि सन्नुता ।
यवीयसी युवप्रीता यात्रानन्दा यतीश्वरी ॥ १५९ ॥

योगि प्रिया योग गम्या योगि ध्येया यथेच्छगा ।
याग प्रिया याज्ञ सेनी योग रूपा यथेष्टदा ॥ १६० ॥

**फलश्रुतिः ।**

इत्येतत् कथितं देवी रहस्यं सर्व कामदम् ।
सर्व पाप प्रशमनं सर्व तीर्थ फल प्रदम् ॥ १६१ ॥

सर्व रोग हरं पुण्यं सर्व ज्ञान मयं शिवम् ।
सर्व सिद्धि प्रदं देवी सर्व सौभाग्य वर्धनम् ॥ १६२ ॥

आयुष्यं वर्धते नित्यं लिखितं यत्र तिष्ठति ।
न चोरा ऽ ग्नि भयं तस्य न च भूत भयं क्वचित् ॥ १६३ ॥

किं पुनः श्रवणोक्तेन तता ऽ पि च वदाम्यहम् ।
सकृच् छ्रवण मात्रेण कोटि जन्माघ नाशनम् ॥ १६४ ॥

महा पादक कोटीनां भञ्जनं स्मृति मात्रतः ।
अपवादक दौर्भाग्य शमनं भुक्ति मुक्तिदम् ॥ १६५ ॥

विष रोगादि दारिद्य मृत्यु संहार कारणम् ।
सप्त कोटि महामन्त्र पारायण फल प्रदम् ॥ १६६ ॥

शत रुद्रीय कोटीनां जप यज्ञ फल प्रदम् ।
चतुस् समुद्र पर्यन्त भूतानां तत् फलं शिवे ॥ १६७ ॥

सहस्र कोटि गोदान फलदं स्मृति मात्रतः ।
कोटयश्वमेध फलदं जरामृत्यु निवारणम् ॥ १६८ ॥

कन्या कोटि प्रदानेन यत् फलं लभते नरः ।
तत् फलं लभते सम्यक् नाम्नां दशशती जपात् ॥ १६९ ॥

यः शृणोति महा विद्यां श्रावयेत् वा समाहितः ।
सोपि मुक्तीं अवाप्नोति यत्र गत्वा न शोचति ॥ १७० ॥

ब्रह्म हत्यादि पापानां नाशः स्यात् श्रवणेन च ।
किं पुनः पठनातस्य मुक्तिः स्यात् अनपायिनी ॥ १७१ ॥

इदं रहस्यं परमं पुरा स्वस्त्ययनं महत् ।
यः सकृत् वा पठेत् स्तोत्रं शृण्यात् वा समाहितः ॥ १७२ ॥

लभते च ततः कामान् अन्ते ब्रह्म पदम् व्रजेत् ।
स च शत्रून् जयेत् सत्यो मातङ्गानिव केसरी ॥ १७३ ॥

**॥ इति श्री रुद्र यामळे शिव पार्वती संवादे ब्रह्म प्रोक्तं**
**श्री गायत्री सहस्त्रनाम स्तोत्रम् सम्पूर्णम् ॥**





ॐ तत्काररूपायै नमः
ॐ तत्त्वज्ञायै नमः
ॐ तत्पदार्थ स्वरूपिण्यै नमः
ॐ तपस् स्वाध्याय निरतायै नमः
ॐ तपस्वि जन सन्नुतायै नमः
ॐ तत्कीर्ति गुण सम्पन्नायै नमः
ॐ तथ्यवाचे नमः
ॐ तपोनिधये नमः
ॐ तत्त्वोपदेश संबन्धायै नमः
ॐ तपोलोक निवासिन्यै नमः
ॐ तरुणादित्य संकाशायै नमः
ॐ तप्त कांचन भूषणायै नमः
ॐ तमो ऽ पहारिण्यै नमः
ॐ तन्त्र्यै नमः
ॐ तारिण्यै नमः
ॐ तार रूपिण्यै नमः
ॐ तलादि भुवनानन्तस्थायै नमः
ॐ तर्क शास्त्र विधायिन्यै नमः
ॐ तन्त्र सारायै नमः
ॐ तन्त्र मातायै नमः
ॐ तन्त्र मार्ग प्रदर्शिन्यै नमः
ॐ तत्त्वायै नमः
ॐ तन्त्र विधानज्ञायै नमः
ॐ तन्त्रस्थायै नमः
ॐ तन्त्र साक्षिण्यै नमः
ॐ तदेक ध्यान निरतायै नमः
ॐ तत्त्व ज्ञान प्रबोधिन्यै नमः
ॐ तन्नाम मन्त्र सुप्रीतायै नमः
ॐ तपस्वि जन सेवितायै नमः
ॐ सकार रूपायै नमः
ॐ सावित्र्यै नमः
ॐ सर्व रूपा सनातन्यै नमः
ॐ संसार दुःख शमन्यै नमः
ॐ सर्व याग फलप्रदायै नमः
ॐ सकलायै नमः
ॐ सत्य संकल्पायै नमः
ॐ सत्यायै नमः
ॐ सत्य प्रदायिन्यै नमः
ॐ संतोष जनन्यै नमः
ॐ सारायै नमः
ॐ सत्यलोक निवासिन्यै नमः
ॐ समुद्र तनया ऽ राध्यायै नमः
ॐ सामगान प्रियायै नमः
ॐ सत्यै नमः
ॐ समानायै नमः
ॐ सामदेव्यै नमः
ॐ समस्तायै नमः
ॐ सुर सेवितायै नमः
ॐ सर्व सम्पत्ति जनन्यै नमः
ॐ सद्गुणायै नमः
ॐ सकलेष्टदायै नमः
ॐ सनकादि मुनि ध्येयायै नमः
ॐ समाना ऽ धिक वर्जितायै नमः
ॐ साध्यायै नमः
ॐ सिद्धायै नमः
ॐ सुधावासायै नमः
ॐ सिद्ध्यै नमः
ॐ साध्य प्रदायिन्यै नमः
ॐ संयुका ऽ राध्य निलयायै नमः
ॐ समुत्तीर्णायै नमः
ॐ सदाशिवायै नमः
ॐ सर्व वेदान्त निलयायै नमः

ॐ सर्व शास्त्रा ऽ र्थ गोचरायै नमः
ॐ सहस्त्र दल पद्मस्थायै नमः
ॐ सर्वज्ञायै नमः
ॐ सर्वतोमुख्यै नमः
ॐ समयायै नमः
ॐ समयाचारायै नमः
ॐ सद् सद् ग्रन्थि भेदिन्यै नमः
ॐ सप्त कोटि महामन्त्र मातायै नमः
ॐ सर्व प्रदायिन्यै नमः
ॐ सगुणायै नमः
ॐ संभ्रमायै नमः
ॐ साक्षिण्यै नमः
ॐ सर्व चैतन्य रूपिण्यै नमः
ॐ सत्कीर्तयै नमः
ॐ सात्त्विक्यै नमः
ॐ साध्व्यै नमः
ॐ सच्चिदानन्द रूपिण्यै नमः
ॐ संकल्प रूपिण्यै नमः
ॐ सन्ध्यायै नमः
ॐ सालग्राम निवासिन्यै नमः
ॐ सर्वोपाधि विनिर्मुक्तायै नमः
ॐ सत्य ज्ञान प्रबोधिन्यै नमः
ॐ विकार रूपायै नमः
ॐ विप्र श्रियै नमः
ॐ विप्रा ऽ राधन तत्परायै नमः
ॐ विप्र प्रियै नमः
ॐ विप्र कल्याण्यै नमः
ॐ विप्र वाक्य स्वरूपिण्यै नमः
ॐ विप्र मन्दिर मध्यस्थायै नमः
ॐ विप्र वाद विनोदिन्यै नमः
ॐ विप्रोपाधि विनिर्भेत्र्यै नमः
ॐ विप्र हत्या विमोचन्यै नमः

ॐ विप्र त्रात्र्यै नमः
ॐ विप्र गोत्रायै नमः
ॐ विप्र गोत्र विर्वधिन्यै नमः
ॐ विप्र भोजन संतुष्टायै नमः
ॐ विष्णु रूपायै नमः
ॐ विनोदिन्यै नमः
ॐ विष्णु मायायै नमः
ॐ विष्णु वन्द्यायै नमः
ॐ विष्णु गर्भायै नमः
ॐ विचित्रिण्यै नमः
ॐ वैष्णव्यै नमः
ॐ विष्णु भगिन्यै नमः
ॐ विष्णु माया विलासिन्यै नमः
ॐ विकार रहितायै नमः
ॐ विश्व विज्ञान घन रूपिण्यै नमः
ॐ विबुधायै नमः
ॐ विष्णु संकल्पायै नमः
ॐ विश्वामित्र प्रसादिन्यै नमः
ॐ विष्णु चैतन्य निलयायै नमः
ॐ विष्णुस्वायै नमः
ॐ विश्व साक्षिण्यै नमः
ॐ विवेकिन्यै नमः
ॐ वियद्रूपायै नमः
ॐ विजयायै नमः
ॐ विश्व मोहिन्यै नमः
ॐ विद्याधर्यै नमः
ॐ विधानज्ञायै नमः
ॐ वेद तत्त्वा ऽ र्थ रूपिण्यै नमः
ॐ विरूपाक्ष्यै नमः
ॐ विराड् रूपायै नमः
ॐ विक्रमायै नमः
ॐ विश्व मंगलायै नमः

ॐ विश्वंभरा समाराध्यायै नमः
ॐ विश्व भ्रमण कारिण्यै नमः
ॐ विनायक्यै नमः
ॐ विनोदस्थायै नमः
ॐ वीरगोष्ठी विवर्धिन्यै नमः
ॐ विवाह रहितायै नमः
ॐ विन्ध्यायै नमः
ॐ विन्ध्याचल निवासिन्यै नमः
ॐ विद्या विद्याकर्यै नमः
ॐ विद्यायै नमः
ॐ विद्या ऽ विद्या प्रबोधिन्यै नमः
ॐ विमलायै नमः
ॐ विभवायै नमः
ॐ वेद्यायै नमः
ॐ विश्वस्थायै नमः
ॐ विविधोज्ज्वलायै नमः
ॐ वीरमध्यायै नमः
ॐ वरारोहायै नमः
ॐ वितन्त्रायै नमः
ॐ विश्व नायिकायै नमः
ॐ वीरहत्या प्रशमन्यै नमः
ॐ विनम्रजन पालिन्यै नमः
ॐ वीरधिये नमः
ॐ विविधाकारायै नमः
ॐ विरोधि जन नाशिन्यै नमः
ॐ तुकार रूपायै नमः
ॐ तुर्य श्रियै नमः
ॐ तुलसी वन वासिन्यै नमः
ॐ तुरंग्यै नमः
ॐ तुरगा ऽ रूढायै नमः
ॐ तुलादान फलप्रदायै नमः
ॐ तुलामाघ स्नान तुष्टायै नमः
ॐ तुष्टि पुष्टि प्रदायिन्यै नमः
ॐ तुरंगम प्रसंतुष्टायै नमः
ॐ तुलितायै नमः
ॐ तुल्य मध्यगायै नमः
ॐ तुंगोत्तुंगायै नमः
ॐ तुंग कुचायै नमः
ॐ तुहिनाचल संस्थितायै नमः
ॐ तुम्बुरादि स्तुति प्रीतायै नमः
ॐ तुषार शिखरीश्वर्यै नमः
ॐ तुष्टायै नमः
ॐ तुष्टि जनन्यै नमः
ॐ तुष्ट लोक निवासिन्यै नमः
ॐ तुलाधारायै नमः
ॐ तुला मध्यायै नमः
ॐ तुलस्थायै नमः
ॐ तुर्य रूपिण्यै नमः
ॐ तुरीय गुण गम्भीरायै नमः
ॐ तूर्य नाद स्वरूपिण्यै नमः
ॐ तूर्य विद्या लास्य तुष्टायै नमः
ॐ तूर्य शास्त्रार्थ वादिन्यै नमः
ॐ तुरीय शास्त्र तत्त्वज्ञायै नमः
ॐ तूर्य वाद विनोदिन्यै नमः
ॐ तूर्य नादान्त निलयायै नमः
ॐ तूर्यानन्द स्वरूपिण्यै नमः
ॐ तुरीय भक्ति जनन्यै नमः
ॐ तुर्य मार्ग प्रदर्शिन्यै नमः
ॐ वकार रूपायै नमः
ॐ वागीश्यै नमः
ॐ वरेण्यायै नमः
ॐ वरसंविधायै नमः
ॐ वरायै नमः
ॐ वरिष्ठायै नमः

ॐ वैदेह्यै नमः
ॐ वेद शास्त्र प्रदर्शिन्यै नमः
ॐ विकल्प शमन्यै नमः
ॐ वाण्यै नमः
ॐ वाञ्छिताऽ र्थ फलप्रदायै नमः
ॐ वयस्थायै नमः
ॐ वयो मध्यायै नमः
ॐ वयो ऽ वस्था विर्वजितायै नमः
ॐ वन्दिन्यै नमः
ॐ वादिन्यै नमः
ॐ वर्यायै नमः
ॐ वाङ्ग्मय्यै नमः
ॐ वीर वन्दितायै नमः
ॐ वान प्रस्थाश्रमस्थायै नमः
ॐ वनदुर्गायै नमः
ॐ वनालयायै नमः
ॐ वनजाक्ष्यै नमः
ॐ वनचर्यै नमः
ॐ वनितायै नमः
ॐ विश्व मोहिन्यै नमः
ॐ वसिष्ठ वाम देवादि वन्द्यायै नमः
ॐ वन्द्य स्वरूपिण्यै नमः
ॐ वैद्यायै नमः
ॐ वैद्य चिकित्सायै नमः
ॐ वषट्कार्यै नमः
ॐ वसुन्धरायै नमः
ॐ वसुमातायै नमः
ॐ वसुत्रात्रे नमः
ॐ वसु जन्म विमोचन्यै नमः
ॐ वसुप्रदायै नमः
ॐ वासुदेव्यै नमः
ॐ वासुदेव मनोहर्यै नमः
ॐ वासवा ऽ र्चित पादश्रियै नमः
ॐ वासवारि विनाशिन्यै नमः
ॐ वागीश्यै नमः
ॐ वाङ् मनस्थायै नमः
ॐ वशिन्यै नमः
ॐ वनवासभुवे नमः
ॐ वामदेव्यै नमः
ॐ वरारोहायै नमः
ॐ वाद्य घोषण तत्परायै नमः
ॐ वाचस्पति समाराध्यायै नमः
ॐ वेदमात्रे नमः
ॐ विनोदिन्यै नमः
ॐ रेकार रूपायै नमः
ॐ रेवायै नमः
ॐ रेवातीर निवासिन्यै नमः
ॐ राजीव लोचनायै नमः
ॐ रामायै नमः
ॐ रागिण्यै नमः
ॐ रति वन्दितायै नमः
ॐ रमण्यै नमः
ॐ राम जप्तायै नमः
ॐ राज्यपायै नमः
ॐ रजताद्रिगायै नमः
ॐ राकिण्यै नमः
ॐ रेवत्यै नमः
ॐ रक्षायै नमः
ॐ रुद्र जन्मायै नमः
ॐ रजस्वलायै नमः
ॐ रेणुकायै नमः
ॐ रमण्यै नमः
ॐ रम्यायै नमः
ॐ रति वृद्धायै नमः

ॐ रता रत्यै नमः
ॐ रावणानन्त सन्धाय्यै नमः
ॐ राज श्रियै नमः
ॐ राज शेखर्यै नमः
ॐ रणमध्यायै नमः
ॐ रथा ऽ रूढायै नमः
ॐ रवि कोटि सम प्रभायै नमः
ॐ रवि मण्डल मध्यस्थायै नमः
ॐ रजन्यै नमः
ॐ रवि लोचनायै नमः
ॐ रथांग पाण्यै नमः
ॐ रक्षोघ्न्यै नमः
ॐ रागिण्यै नमः
ॐ रावणा ऽ र्चितायै नमः
ॐ रंभादि कन्यका ऽ राध्यायै नमः
ॐ राज्यदायै नमः
ॐ राज्य वर्धिन्यै नमः
ॐ रजताद्रीश सक्तिस्थायै नमः
ॐ रम्यायै नमः
ॐ राजीव लोचनायै नमः
ॐ रम्य वाण्यै नमः
ॐ रमा ऽ राध्यायै नमः
ॐ राज्य धात्र्यै नमः
ॐ रतोत्सवायै नमः
ॐ रेवत्यै नमः
ॐ रतोत्साहायै नमः
ॐ राजहृद् रोग हारिण्यै नमः
ॐ रंग प्रवृद्ध मधुरायै नमः
ॐ रंग मण्डप मध्यगायै नमः
ॐ रञ्जितायै नमः
ॐ राज जनन्यै नमः
ॐ रम्यायै नमः
ॐ राकेन्दु मध्यगायै नमः
ॐ राविण्यै नमः
ॐ रागिण्यै नमः
ॐ रञ्ज्यायै नमः
ॐ राजराजेश्वरा ऽ र्चितायै नमः
ॐ राजन्वत्यै नमः
ॐ राजनीत्यै नमः
ॐ रजताचल वासिन्यै नमः
ॐ राघवा ऽ र्चित पादश्रयै नमः
ॐ राघवायै नमः
ॐ राघव प्रियायै नमः
ॐ रत्न सागर मध्यस्थायै नमः
ॐ रत्न द्वीप निवासिन्यै नमः
ॐ रत्न प्राकार मध्यस्थायै नमः
ॐ रत्न मण्डप मध्यगायै नमः
ॐ रत्ना ऽ भिषेक सन्तुष्टायै नमः
ॐ रत्नांग्यै नमः
ॐ रत्न दायिन्यै नमः
ॐ णिकार रूपिण्यै नमः
ॐ नित्यायै नमः
ॐ नित्य तृप्तायै नमः
ॐ निरञ्जनायै नमः
ॐ निद्रात्यय विशेषज्ञायै नमः
ॐ नील जीमूत सन्निभायै नमः
ॐ नीवारशूकवत् तन्व्यै नमः
ॐ नित्य कल्याण रूपिण्यै नमः
ॐ नित्योत्सवायै नमः
ॐ नित्य पूज्यायै नमः
ॐ नित्यानन्द स्वरूपिण्यै नमः
ॐ निर्विकल्पायै नमः
ॐ निर्गुणस्थायै नमः
ॐ निश्चिन्तायै नमः

ॐ निरुपद्रवायै नमः
ॐ निस्संशयायै नमः
ॐ निरीहायै नमः
ॐ निर्लोभायै नमः
ॐ नीलमूर्धजायै नमः
ॐ निखिलागम मध्यस्थायै नमः
ॐ निखिलागम संस्थितायै नमः
ॐ नित्योपाधि विनिर्मुक्तायै नमः
ॐ नित्यकर्म फलप्रदायै नमः
ॐ नीलग्रीवायै नमः
ॐ निराहारायै नमः
ॐ निरञ्जन वरप्रदायै नमः
ॐ नवनीत प्रियायै नमः
ॐ नार्यै नमः
ॐ नरकार्णव तारिण्यै नमः
ॐ नारायण्यै नमः
ॐ निरीहायै नमः
ॐ निर्मलायै नमः
ॐ निर्गुण प्रियायै नमः
ॐ निश्चिन्तायै नमः
ॐ निगमाचारायै नमः
ॐ निखिलागम वेदिन्यै नमः
ॐ निमेषायै नमः
ॐ निमिषोत्पन्नायै नमः
ॐ निमेषाण्ड विधायिन्यै नमः
ॐ निवात दीप मध्यस्थायै नमः
ॐ निर्विघ्नायै नमः
ॐ नीच नाशिन्यै नमः
ॐ नीलवेण्यै नमः
ॐ नीलकण्ठायै नमः
ॐ निर्विषायै नमः
ॐ निष्कशोभितायै नमः
ॐ नीलांशुक परीधानायै नमः
ॐ निन्द्यघ्न्यै नमः
ॐ निरीश्वर्यै नमः
ॐ निश्वासोच्छ्वास मध्यस्थायै नमः
ॐ नित्यं यान विलासिन्यै नमः
ॐ यम्काररूपायै नमः
ॐ यन्त्रेश्यै नमः
ॐ यन्त्र्यै नमः
ॐ यन्त्रायै नमः
ॐ यशस्विन्यै नमः
ॐ यन्त्रा ऽ राधन संतुष्टायै नमः
ॐ यजमान स्वरूपिण्यै नमः
ॐ योगि पूज्यायै नमः
ॐ यकारस्थायै नमः
ॐ यूपस्तंभ निवासिन्यै नमः
ॐ यमघ्न्यै नमः
ॐ यम कल्पायै नमः
ॐ यशः कामायै नमः
ॐ यतीश्वर्यै नमः
ॐ यमादि योग निरतायै नमः
ॐ यति दुःखा ऽ पहारिण्यै नमः
ॐ यज्ञायै नमः
ॐ यज्वायै नमः
ॐ यजुर्गेयायै नमः
ॐ यज्ञेश्वर पतिव्रतायै नमः
ॐ यज्ञ सूत्र प्रदायै नमः
ॐ यष्ट्र्यै नमः
ॐ यज्ञ कर्म फलप्रदायै नमः
ॐ यवांकुर प्रियायै नमः
ॐ यन्त्र्यै नमः
ॐ यवदघ्न्यै नमः
ॐ यवा ऽ र्चितायै नमः

ॐ यज्ञ कर्त्र्यै नमः
ॐ यज्ञ भोक्त्र्यै नमः
ॐ यज्ञा ऽ ङ्ग्यै नमः
ॐ यज्ञ वाहिन्यै नमः
ॐ यज्ञ साक्ष्यै नमः
ॐ यज्ञ मुख्यै नमः
ॐ यजुष्यै नमः
ॐ यज्ञ रक्षण्यै नमः
ॐ भकार रूपायै नमः
ॐ भद्रेश्यै नमः
ॐ भद्र कल्याण दायिन्यै नमः
ॐ भक्त प्रियायै नमः
ॐ भक्त सखायै नमः
ॐ भक्ता ऽ भीष्ट स्वरूपिण्यै नमः
ॐ भगिन्यै नमः
ॐ भक्ति सुलभायै नमः
ॐ भक्ति दायै नमः
ॐ भक्त वत्सलायै नमः
ॐ भक्त चैतन्य निलयायै नमः
ॐ भक्त बन्ध विमोचन्यै नमः
ॐ भक्त स्वरूपिण्यै नमः
ॐ भाग्यायै नमः
ॐ भक्ता ऽ रोग्य प्रदायिन्यै नमः
ॐ भक्त मात्रे नमः
ॐ भक्त गम्यायै नमः
ॐ भक्ता ऽ भीष्ट प्रदायिन्यै नमः
ॐ भास्कर्यै नमः
ॐ भैरव्यै नमः
ॐ भोग्यायै नमः
ॐ भवान्यै नमः
ॐ भय नाशिन्यै नमः
ॐ भद्रा ऽ त्मिकायै नमः
ॐ भद्र दायिन्यै नमः
ॐ भद्रकाल्यै नमः
ॐ भयंकर्यै नमः
ॐ भगनिष्यन्दिन्यै नमः
ॐ भूम्न्यै नमः
ॐ भव बन्ध विमोचन्यै नमः
ॐ भीमायै नमः
ॐ भवसखायै नमः
ॐ भंग्यै नमः
ॐ भंगुरायै नमः
ॐ भीम दर्शिन्यै नमः
ॐ भल्ल्यै नमः
ॐ भल्लीधरायै नमः
ॐ भीरवे नमः
ॐ भेरूण्डायै नमः
ॐ भीमपापहायै नमः
ॐ भावज्ञायै नमः
ॐ भोग दात्र्यै नमः
ॐ भवघ्न्यै नमः
ॐ भूति भूषणायै नमः
ॐ भूति दायै नमः
ॐ भूमि दात्र्यै नमः
ॐ भूपतित्व प्रदायिन्यै नमः
ॐ भ्रामर्यै नमः
ॐ भ्रमर्यै नमः
ॐ भार्यै नमः
ॐ भव सागर तारिण्यै नमः
ॐ भण्डासुर वधोत्साहायै नमः
ॐ भाग्यदायै नमः
ॐ भावनोदिन्यै नमः
ॐ गोकार रूपायै नमः
ॐ गोमात्रे नमः

ॐ गुरु पत्न्यै नमः
ॐ गुरु प्रियायै नमः
ॐ गोरोचन प्रियायै नमः
ॐ गौर्यै नमः
ॐ गोविन्द् गुण वर्धिन्यै नमः
ॐ गोपाल चेष्टा संतुष्टायै नमः
ॐ गोवर्धन विर्वधिन्यै नमः
ॐ गोविन्द् रूपिण्यै नमः
ॐ गोप्त्र्यै नमः
ॐ गोकुलानन्द् विर्वधिन्यै नमः
ॐ गीतायै नमः
ॐ गीत प्रियायै नमः
ॐ गेयायै नमः
ॐ गोदायै नमः
ॐ गोरूप धारिण्यै नमः
ॐ गोप्त्र्यै नमः
ॐ गोहत्य शमन्यै नमः
ॐ गुणिन्यै नमः
ॐ गुण विग्रहायै नमः
ॐ गोविन्द् जनन्यै नमः
ॐ गोष्ठायै नमः
ॐ गोप्रदायै नमः
ॐ गोकुलोत्सवायै नमः
ॐ गोचर्यै नमः
ॐ गौतम्यै नमः
ॐ गङ्गायै नमः
ॐ गोमुख्यै नमः
ॐ गुरु वासिन्यै नमः
ॐ गोपाल्यै नमः
ॐ गोमय्यै नमः
ॐ गुंफायै नमः
ॐ गोष्ठ्यै नमः
ॐ गोपुर वासिन्यै नमः
ॐ गरूडा गमन श्रेष्ठायै नमः
ॐ गारुडायै नमः
ॐ गरुड ध्वजायै नमः
ॐ गंभीरायै नमः
ॐ गण्डक्यै नमः
ॐ गुंफायै नमः
ॐ गरुड ध्वज वल्लभायै नमः
ॐ गगनस्थायै नमः
ॐ गयावासायै नमः
ॐ गुण वृद्ध्यै नमः
ॐ गुणोद्भवायै नमः
ॐ देकार रूपायै नमः
ॐ देवेश्यै नमः
ॐ दृग् रूपायै नमः
ॐ देवता ऽ र्चितायै नमः
ॐ देवराजेश्वरा ऽ र्धाङ्ग्यै नमः
ॐ दीन दैन्य विमोचन्यै नमः
ॐ देशकाल परिज्ञानायै नमः
ॐ देशोपद्रव नाशिन्यै नमः
ॐ देव मात्रे नमः
ॐ देव मोहायै नमः
ॐ देव दानव मोहिन्यै नमः
ॐ देवेन्द्रा ऽ र्चित पादश्रियै नमः
ॐ देवदेव प्रसादिन्यै नमः
ॐ देशान्तर्यै नमः
ॐ देश रूपायै नमः
ॐ देवालय निवासिन्यै नमः
ॐ देश भ्रमण संतुष्टायै नमः
ॐ देशस्वास्थ्य प्रदायिन्यै नमः
ॐ देवयानायै नमः
ॐ देवतायै नमः

ॐ देव सैन्य प्रपालिन्यै नमः
ॐ वकार रूपायै नमः
ॐ वाग्देव्यै नमः
ॐ वेद मानस गोचरायै नमः
ॐ वैकुण्ठ देशिकायै नमः
ॐ वेद्यायै नमः
ॐ वायु रूपायै नमः
ॐ वर प्रदायै नमः
ॐ वक्रतुण्डा ऽ र्चित पदायै नमः
ॐ वक्रतुण्ड प्रसादिन्यै नमः
ॐ वैचित्र्य रूपायै नमः
ॐ वसुधायै नमः
ॐ वसुस्थानायै नमः
ॐ वसु प्रियायै नमः
ॐ वषट्कार स्वरूपायै नमः
ॐ वरारोहायै नमः
ॐ वरासनायै नमः
ॐ वैदेही जनन्यै नमः
ॐ वेद्यायै नमः
ॐ वैदेही शोक नाशिन्यै नमः
ॐ वेद मात्रे नमः
ॐ वेद कन्यायै नमः
ॐ वेद रूपायै नमः
ॐ विनोदिन्यै नमः
ॐ वेदान्त वादिन्यै नमः
ॐ वेदान्त निलय प्रियायै नमः
ॐ वेद श्रवायै नमः
ॐ वेद घोषायै नमः
ॐ वेद गीता विनोदिन्यै नमः
ॐ वेद शास्त्रा ऽ र्थ तत्त्वज्ञायै नमः
ॐ वेद मार्ग प्रदर्शिन्यै नमः
ॐ वेदोक्त कर्म फलदायै नमः
ॐ वेद सागर बाडबायै नमः
ॐ वेद वन्द्यायै नमः
ॐ वेद गुह्यायै नमः
ॐ वेदा ऽ श्व रथ वाहिन्यै नमः
ॐ वेद चक्रायै नमः
ॐ वेद वन्द्यायै नमः
ॐ वेदांग्यै नमः
ॐ वेदवित् कवये नमः
ॐ स्यकार रूपायै नमः
ॐ सामन्तायै नमः
ॐ सामगान विचक्षणायै नमः
ॐ साम्राज्यायै नमः
ॐ साम रूपायै नमः
ॐ सदानन्द प्रदायै नमः
ॐ सर्व दृक् सन्निविष्टायै नमः
ॐ सर्व सम्प्रेषिण्यै नमः
ॐ सहायै नमः
ॐ सव्यापसव्यदायै नमः
ॐ सव्यायै नमः
ॐ सध्रीच्यै नमः
ॐ सहायिन्यै नमः
ॐ सकलायै नमः
ॐ सागरा सारायै नमः
ॐ सार्व भौम स्वरूपिण्यै नमः
ॐ संतोष जनन्यै नमः
ॐ सेव्यायै नमः
ॐ सर्वेश्यै नमः
ॐ सर्व रञ्जन्यै नमः
ॐ सरस्वती समाराध्यायै नमः
ॐ सामदायै नमः
ॐ सिन्धु सेवितायै नमः
ॐ संमोहिन्यै नमः

ॐ सदामोहायै नमः
ॐ सर्व मांगल्य दायिन्यै नमः
ॐ समस्त भुवनेशान्यै नमः
ॐ सर्व काम फल प्रदायै नमः
ॐ सर्व सिद्धि प्रदायै नमः
ॐ साध्व्यै नमः
ॐ सर्व ज्ञान प्रदायिन्यै नमः
ॐ सर्व दारिद्रय शमन्यै नमः
ॐ सर्व दुःख विमोचन्यै नमः
ॐ सर्व रोग प्रशमन्यै नमः
ॐ सर्व पाप विमोचन्यै नमः
ॐ सम दृष्ट्यै नमः
ॐ सम गुणायै नमः
ॐ सर्व गोप्त्र्यै नमः
ॐ सहायिन्यै नमः
ॐ सामर्थ्य वाहिन्यै नमः
ॐ साङ्ख्यायै नमः
ॐ सान्द्रानन्द पयोधरायै नमः
ॐ संकीर्ण मन्दिर स्थानायै नमः
ॐ साकेत कुल पालिन्यै नमः
ॐ संहारिण्यै नमः
ॐ सुधा रूपायै नमः
ॐ साकेत पुर वासिन्यै नमः
ॐ संबोधिन्यै नमः
ॐ समस्तेश्यै नमः
ॐ सत्य ज्ञान स्वरूपिण्यै नमः
ॐ संपत्कर्यै नमः
ॐ समानांग्यै नमः
ॐ सर्व भाव सुसंस्थितायै नमः
ॐ सन्ध्या वन्दन सुप्रीतायै नमः
ॐ सन्मार्ग कुल पालिन्यै नमः
ॐ सञ्जीविन्यै नमः
ॐ सर्व मेधायै नमः
ॐ सभ्यायै नमः
ॐ साधु सुपूजितायै नमः
ॐ समिद्धायै नमः
ॐ सामिधेन्यै नमः
ॐ सामान्यायै नमः
ॐ साम वेदिन्यै नमः
ॐ समुत्तीर्णायै नमः
ॐ सदाचारायै नमः
ॐ संहारायै नमः
ॐ सर्व पावन्यै नमः
ॐ सर्पिण्यै नमः
ॐ सर्प मात्रे नमः
ॐ सावदानायै नमः
ॐ सुख प्रदायै नमः
ॐ सर्व रोग प्रशमन्यै नमः
ॐ सर्वज्ञत्व फल प्रदायै नमः
ॐ संक्रमायै नमः
ॐ समदायै नमः
ॐ सिन्धु
ॐ सर्गादि करण क्षमायै नमः
ॐ संकटायै नमः
ॐ संकट हरायै नमः
ॐ सकुंकुम विलेपनायै नमः
ॐ सुमुख्यै नमः
ॐ सुमुख प्रीतायै नमः
ॐ समानाधिक वर्जितायै नमः
ॐ संस्तुतायै नमः
ॐ स्तुति सुप्रीतायै नमः
ॐ सत्य वादिन्यै नमः
ॐ सदास्पदायै नमः
ॐ धीकार रूपायै नमः

ॐ धीमात्रे नमः
ॐ धीरायै नमः
ॐ धीर प्रसादिन्यै नमः
ॐ धीरोत्तमायै नमः
ॐ धीर धीरायै नमः
ॐ धीरस्थायै नमः
ॐ धीर शेखरायै नमः
ॐ धृति रूपायै नमः
ॐ धनाढयायै नमः
ॐ धनपायै नमः
ॐ धन दायिन्यै नमः
ॐ धी रूपायै नमः
ॐ धीर वन्द्यायै नमः
ॐ धी प्रभायै नमः
ॐ धीर मानसायै नमः
ॐ धीगेयायै नमः
ॐ धीपदस्थायै नमः
ॐ धीशानायै नमः
ॐ धी प्रसादिन्यै नमः
ॐ मकार रूपायै नमः
ॐ मैत्रेयायै नमः
ॐ महा मंगल देवतायै नमः
ॐ मनोवैकल्य शमन्यै नमः
ॐ मलयाचल वासिन्यै नमः
ॐ मलय ध्वज राजश्रियै नमः
ॐ माया मोह विभेदिन्यै नमः
ॐ महादेव्यै नमः
ॐ महारूपायै नमः
ॐ महाभैरव पूजितायै नमः
ॐ मनु प्रीतायै नमः
ॐ मन्त्र मूर्त्यै नमः
ॐ मन्त्र वश्यायै नमः
ॐ महेश्वर्यै नमः
ॐ मत्त मातंग गमनायै नमः
ॐ मधुरायै नमः
ॐ मेरु मण्डपायै नमः
ॐ महागुप्तायै नमः
ॐ महाभूतायै नमः
ॐ महाभय विनाशिन्यै नमः
ॐ महाशौर्यायै नमः
ॐ मन्त्रिण्यै नमः
ॐ महावैरि विनाशिन्यै नमः
ॐ महालक्ष्म्यै नमः
ॐ महागौर्यै नमः
ॐ महिषासुर मर्दिन्यै नमः
ॐ महेशायै नमः
ॐ मण्डलस्थायै नमः
ॐ मधुरागम पूजितायै नमः
ॐ मेधायै नमः
ॐ मेधाकर्यै नमः
ॐ मेध्यायै नमः
ॐ माधव्यै नमः
ॐ मधु मर्दिन्यै नमः
ॐ मन्त्रायै नमः
ॐ मन्त्रमय्यै नमः
ॐ मान्यायै नमः
ॐ मायायै नमः
ॐ माधव मन्त्रिण्यै नमः
ॐ मायादूरायै नमः
ॐ माया ऽ ढयायै नमः
ॐ मायाज्ञायै नमः
ॐ मान दायिन्यै नमः
ॐ माया संकल्प जनन्यै नमः
ॐ मायामय विनोदिन्यै नमः

ॐ माया प्रपंच शमन्यै नमः
ॐ माया संहार रूपिण्यै नमः
ॐ माया मन्त्र प्रसादायै नमः
ॐ मायाजन विमोहिन्यै नमः
ॐ महापथायै नमः
ॐ महाभोगायै नमः
ॐ महाविघ्न विनाशिन्यै नमः
ॐ महानुभावायै नमः
ॐ मन्त्राढयायै नमः
ॐ महामंगल देवतायै नमः
ॐ हिकार रूपायै नमः
ॐ हृद्यायै नमः
ॐ हितकार्य प्रर्वधिन्यै नमः
ॐ हेयोपाधि विनिर्मुक्तायै नमः
ॐ हीन लोक विनाशिन्यै नमः
ॐ ह्रींकार्यै नमः
ॐ ह्रीमत्यै नमः
ॐ हृद्यायै नमः
ॐ ह्रीं देव्यै नमः
ॐ ह्रीं स्वभाविन्यै नमः
ॐ ह्रीं मंदिरायै नमः
ॐ हित कर्यै नमः
ॐ हृष्टायै नमः
ॐ ह्रीं कुलोद्भवायै नमः
ॐ हित प्रज्ञायै नमः
ॐ हित प्रीतायै नमः
ॐ हित कारुण्य वर्धिन्यै नमः
ॐ हिताशिन्यै नमः
ॐ हित क्रोधायै नमः
ॐ हित कर्म फलप्रदायै नमः
ॐ हिमायै नमः
ॐ हैमवत्यै नमः
ॐ हैम्न्यै नमः
ॐ हेमाचल निवासिन्यै नमः
ॐ हिमागजायै नमः
ॐ हित कर्यै नमः
ॐ हित कर्म स्वभाविन्यै नमः
ॐ धीकार रूपायै नमः
ॐ धिषणायै नमः
ॐ धर्म रूपायै नमः
ॐ धनेश्वर्यै नमः
ॐ धनुर्धरायै नमः
ॐ धराधारायै नमः
ॐ धर्म कर्म फल प्रदायै नमः
ॐ धर्मा चारायै नमः
ॐ धर्म सारायै नमः
ॐ धर्म मध्य निवासिन्यै नमः
ॐ धनुर् विद्यायै नमः
ॐ धनुर् वेदायै नमः
ॐ धन्यायै नमः
ॐ धूर्त विनाशिन्यै नमः
ॐ धन धान्यायै नमः
ॐ धेनु रूपायै नमः
ॐ धनाढ्यायै नमः
ॐ धन दायिन्यै नमः
ॐ धनेश्यै नमः
ॐ धर्म निरतायै नमः
ॐ धर्मराज प्रसादिन्यै नमः
ॐ धर्म स्वरूपायै नमः
ॐ धर्मेश्यै नमः
ॐ धर्मा ऽ धर्म विचारिण्यै नमः
ॐ धर्म सूक्ष्मायै नमः
ॐ धर्म गेहायै नमः
ॐ धर्मिष्ठायै नमः

ॐ धर्म गोचरायै नमः
ॐ योकार रूपायै नमः
ॐ योगेश्यै नमः
ॐ योगस्थायै नमः
ॐ योग रूपिण्यै नमः
ॐ योग्य योगीश वरदायै नमः
ॐ योग मार्ग निवासिन्यै नमः
ॐ योगसनस्थायै नमः
ॐ योगेश्यै नमः
ॐ योग माया विलासिन्यै नमः
ॐ योगिन्यै नमः
ॐ योग रक्तायै नमः
ॐ योगांग्यै नमः
ॐ योग विग्रहायै नमः
ॐ योग वासायै नमः
ॐ योग भोग्यायै नमः
ॐ योग मार्ग प्रदर्शिन्यै नमः
ॐ योकार रूपायै नमः
ॐ योधा ऽ ढ्यायै नमः
ॐ योद्ध्रयै नमः
ॐ योधसु तत्परायै नमः
ॐ योगिन्यै नमः
ॐ योगिनी सेव्यायै नमः
ॐ योग ज्ञान प्रबोधिन्यै नमः
ॐ योगीश्वर प्राण नाथायै नमः
ॐ योगीश्वर हृदि स्थितायै नमः
ॐ योगायै नमः
ॐ योग क्षेम कर्त्र्यै नमः
ॐ योग क्षेम विधायिन्यै नमः
ॐ योग राजेश्वरा ऽ राध्यायै नमः
ॐ योगानन्द स्वरूपिण्यै नमः
ॐ नकार रूपायै नमः
ॐ नादेश्यै नमः
ॐ नाम पारायण प्रियायै नमः
ॐ नव सिद्धि समा ऽ राध्यायै नमः
ॐ नारायण मनोहर्यै नमः
ॐ नारायण्यै नमः
ॐ नवाधारायै नमः
ॐ नवब्रह्मा ऽ र्चितांघ्रिकायै नमः
ॐ नगेन्द्र तनया ऽ राध्यायै नमः
ॐ नाम रूप विवर्जितायै नमः
ॐ नरसिंहा ऽ र्चित पदायै नमः
ॐ नवबन्ध विमोचन्यै नमः
ॐ नवग्रहा ऽ र्चित पदायै नमः
ॐ नवमी पूजन प्रियायै नमः
ॐ नैमित्तिका ऽ र्थ फलदायै नमः
ॐ नन्दितारि विनाशिन्यै नमः
ॐ नवपीठ स्थितायै नमः
ॐ नादायै नमः
ॐ नवर्षि गण सेवितायै नमः
ॐ नवसूत्र विधानज्ञायै नमः
ॐ नैमिशारण्य वासिन्यै नमः
ॐ नवचन्दन दिग्धांग्यै नमः
ॐ नवकुंकुम धारिण्यै नमः
ॐ नववस्त्र परीधानायै नमः
ॐ नवरत्न विभूषणायै नमः
ॐ नव्य भस्म विदिग्धांग्यै नमः
ॐ नवचन्द्र कलाधरायै नमः
ॐ प्रकार रूपायै नमः
ॐ प्राणेश्यै नमः
ॐ प्राण संरक्षण्यै नमः
ॐ परायै नमः
ॐ प्राण सञ्जीविन्यै नमः
ॐ प्राच्यायै नमः

ॐ प्राण्यै नमः
ॐ प्राण प्रबोधिन्यै नमः
ॐ प्रज्ञायै नमः
ॐ प्राज्ञायै नमः
ॐ प्रभायै नमः
ॐ पुष्पायै नमः
ॐ प्रतीच्यै नमः
ॐ प्रबुध प्रियायै नमः
ॐ प्राचीनायै नमः
ॐ प्राणि चित्तस्थायै नमः
ॐ प्रभायै नमः
ॐ प्रज्ञान रूपिण्यै नमः
ॐ प्रभात कर्म सन्तुष्टायै नमः
ॐ प्राणायाम परायणायै नमः
ॐ प्रायज्ञायै नमः
ॐ प्रणवायै नमः
ॐ प्राणायै नमः
ॐ प्रवृत्त्यै नमः
ॐ प्रकृत्यै नमः
ॐ परायै नमः
ॐ प्रबन्धायै नमः
ॐ प्रथमायै नमः
ॐ प्रज्ञायै नमः
ॐ प्रारब्ध नाशिन्यै नमः
ॐ प्रबोध निरतायै नमः
ॐ प्रेक्ष्यायै नमः
ॐ प्रबन्धायै नमः
ॐ प्राण साक्षिण्यै नमः
ॐ प्रयाग तीर्थ निलयायै नमः
ॐ प्रत्यक्ष परमेश्वर्यै नमः
ॐ प्रणवाद्यन्त निलयायै नमः
ॐ प्रणवाद्यै नमः
ॐ प्रजेश्वर्यै नमः
ॐ चोकार रूपायै नमः
ॐ चोरघ्न्यै नमः
ॐ चोर बाधा विनाशिन्यै नमः
ॐ चैतन्यायै नमः
ॐ चेतनस्थायै नमः
ॐ चतुरायै नमः
ॐ चमत्कृतये नमः
ॐ चक्रवर्ति कुला ऽ धारायै नमः
ॐ चक्रिण्यै नमः
ॐ चक्र धारिण्यै नमः
ॐ चित्तगेयायै नमः
ॐ चिदानन्दायै नमः
ॐ चिद्रूपायै नमः
ॐ चिद्विलासिन्यै नमः
ॐ चिन्तायै नमः
ॐ चित्त प्रशमन्यै नमः
ॐ चिन्तितार्थ फलप्रदायै नमः
ॐ चाम्पेय्यै नमः
ॐ चम्पक प्रीतायै नमः
ॐ चण्डयै नमः
ॐ चण्डाट्टहासिन्यै नमः
ॐ चण्डेश्वर्यै नमः
ॐ चण्डमात्रे नमः
ॐ चण्ड मुण्ड विनाशिन्यै नमः
ॐ चकोराक्ष्यै नमः
ॐ चिरप्रीतायै नमः
ॐ चिकुरायै नमः
ॐ चिकुरालकायै नमः
ॐ चैतन्य रूपिण्यै नमः
ॐ चैत्र्यै नमः
ॐ चेतनायै नमः

ॐ चित्त साक्षिण्यै नमः
ॐ चित्रायै नमः
ॐ चित्र विचित्रांग्यै नमः
ॐ चित्रगुप्त प्रसादिन्यै नमः
ॐ चलनायै नमः
ॐ चक्र संस्थायै नमः
ॐ चाम्पेय्यै नमः
ॐ चलचित्रिण्यै नमः
ॐ चन्द्र मण्डल मध्यस्थायै नमः
ॐ चन्द्र कोटि सुशीतलायै नमः
ॐ चन्द्रानुज समाराध्यायै नमः
ॐ चन्द्रायै नमः
ॐ चन्द्र सहोदर्यै नमः
ॐ चर्चितारये नमः
ॐ चन्द्र मात्रे नमः
ॐ चन्द्र कान्तायै नमः
ॐ चलेश्वर्यै नमः
ॐ चराचर निवासायै नमः
ॐ चक्रपाणि सहोदर्यै नमः
ॐ दकार रूपायै नमः
ॐ दत्तश्रियै नमः
ॐ दारिद्र्य च्छेद कारिण्यै नमः
ॐ दत्तात्रेयस्य वरदायै नमः
ॐ दरांग्यै नमः
ॐ दीन वत्सलायै नमः
ॐ दक्षा ऽ राध्यायै नमः
ॐ दक्ष कन्यायै नमः
ॐ दक्ष यज्ञ विनाशिन्यै नमः
ॐ दक्षायै नमः
ॐ दाक्षायण्यै नमः
ॐ दीक्षायै नमः
ॐ दृष्टायै नमः

ॐ दक्ष वरप्रदायै नमः
ॐ दक्षिणायै नमः
ॐ दक्षिणा ऽ राध्यायै नमः
ॐ दक्षिणामूर्ति रूपिण्यै नमः
ॐ दयावत्यै नमः
ॐ दमस्वान्तायै नमः
ॐ दनुजारये नमः
ॐ दयानिधये नमः
ॐ दन्त शोभा निभायै नमः
ॐ देव्यै नमः
ॐ दमनायै नमः
ॐ दाडिमस्तनायै नमः
ॐ दण्डायै नमः
ॐ दमयित्र्यै नमः
ॐ दण्डिन्यै नमः
ॐ दमन प्रियायै नमः
ॐ दण्डका ऽ रण्य निलयायै नमः
ॐ दण्डकारि विनाशिन्यै नमः
ॐ दंष्ट्रा कराल वदनायै नमः
ॐ दण्ड शोभायै नमः
ॐ दरोदर्यै नमः
ॐ दरिद्रा ऽ रिष्ट शमन्यै नमः
ॐ दम्यायै नमः
ॐ दमन पूजितायै नमः
ॐ दानवा ऽ र्चित पादश्रचै नमः
ॐ द्रविणायै नमः
ॐ द्राविण्यै नमः
ॐ दयायै नमः
ॐ दामोदर्यै नमः
ॐ दानवारि
ॐ दामोदर सहोदर्यै नमः
ॐ दात्र्यै नमः

ॐ दानप्रियायै नमः
ॐ दाम्न्यै नमः
ॐ दान श्रियै नमः
ॐ द्विज वन्दितायै नमः
ॐ दन्तिगायै नमः
ॐ दण्डिन्यै नमः
ॐ दूर्वायै नमः
ॐ दधि दुग्ध स्वरूपिण्यै नमः
ॐ दाडिमी बीज संदोहायै नमः
ॐ दन्त पङ्क्ति विराजितायै नमः
ॐ दर्पणायै नमः
ॐ दर्पण स्वच्छायै नमः
ॐ द्रुम मण्डल वासिन्यै नमः
ॐ दशावतार जनन्यै नमः
ॐ दश दिग् दैव पूजितायै नमः
ॐ दमायै नमः
ॐ दश दिशायै नमः
ॐ दृश्यायै नमः
ॐ दशदास्यै नमः
ॐ दयानिधये नमः
ॐ देशकाल परिज्ञानायै नमः
ॐ देशकाल विशोधिन्यै नमः
ॐ दशम्यादि कला ऽ राध्यायै नमः
ॐ दशग्रीव विरोधिन्यै नमः
ॐ दशा ऽ पराध शमन्यै नमः
ॐ दश वृत्ति फलप्रदायै नमः
ॐ यात्कार रूपिण्यै नमः
ॐ याज्ञ्यै नमः
ॐ यादव्यै नमः
ॐ यादवा ऽ र्चितायै नमः
ॐ ययाति पूजन प्रीतायै नमः
ॐ याज्ञिक्यै नमः
ॐ याजक प्रियायै नमः
ॐ यजमानायै नमः
ॐ यदु प्रीतायै नमः
ॐ याम पूजा फलप्रदायै नमः
ॐ यशस्विन्यै नमः
ॐ यमा ऽ राध्यायै नमः
ॐ यम कन्यायै नमः
ॐ यतीश्वर्यै नमः
ॐ यमादि योग सन्तुष्टायै नमः
ॐ योगीन्द्र हृदयायै नमः
ॐ यमायै नमः
ॐ यमोपाधि विनिर्मुक्तायै नमः
ॐ यशस्य विधि सन्नुतायै नमः
ॐ यवीयस्यै नमः
ॐ युवप्रीतायै नमः
ॐ यात्रानन्दायै नमः
ॐ यतीश्वर्यै नमः
ॐ योगि प्रियायै नमः
ॐ योग गम्यायै नमः
ॐ योगि ध्येयायै नमः
ॐ यथेच्छगायै नमः
ॐ याग प्रियायै नमः
ॐ याज्ञ सेन्यै नमः
ॐ योग रूपायै नमः
ॐ यथेष्टदायै नमः

॥ इति श्री रुद्र यामळे ब्रह्म प्रोक्त गायत्री सहस्त्रनाम स्तोत्रम् सम्पूर्णम् ॥



# ॥ श्री गायत्री स्तोत्रम् (देवी भागवतम्) ॥
## Sri Gayatri Stotram – Devi Bhagavatam

The following Stuti on Sri. Gayatri is taken from Srimad. Bhagavatam. Though this stuti can be chanted anytime, it will especially be beneficial to chant this while taking bath. This Stuti is said to destroy one of all sins and bestow wealth and health.

श्री नारद उवाच -

भक्तानुकंपिन् सर्वज्ञ हृदयं पाप नाशनम्।
गायत्र्याः कथितं तस्माद् गायत्र्याः स्तोत्रमीरय ॥ १ ॥

श्री नारायण उवाच -

आदिशक्ते जगन्मातर् भक्तानुग्रह कारिणी।
सर्वत्र व्यापिके ऽ नन्ते श्रीसंध्ये ते नमो ऽ स्तु ते ॥ २ ॥

त्वमेव संध्या गायत्री सावित्री च सरस्वती।
ब्रह्माणी वैष्णवी रौद्री रक्त श्वेता सितेतरा ॥ ३ ॥

प्रातर् बाला च मध्याह्ने यौवनस्था भवेत् पुनः।
वृद्धा सायं भगवती चिन्त्यते मुनिभिः सह ॥ ४ ॥

हंसस्था गरुडारूढा तथा वृषभ वाहिनी।
ऋग्वेदाध्यायिनी भूमौ दृश्यते या तपस्विभिः ॥ ५ ॥

यजुर्वेदं पठन्ती च अन्तरिक्षे विराजते।
या सामगापि सर्वेषु भ्राम्यमाणा तथा भुवि ॥ ६ ॥

रुद्रलोकं गता त्वं हि विष्णुलोक निवासिनी।
त्वमेव ब्रह्मणो लोके ऽ मर्त्यानुग्रह कारिणी ॥ ७ ॥

सप्तर्षि प्रीति जननी माया बहु वरप्रदा।
शिवयोः कर नेत्रोत्था ह्यश्रुस्वेद समुद्भवा ॥ ८ ॥

आनन्द जननी दुर्गा दशधा परिपठ्यते।
वरेण्या वरदा चैव वरिष्ठा वरवर्णिनी ॥ ९ ॥

गरिष्ठा च वराही च वरारोहा च सप्तमी।
नीलगंगा तथा संध्या सर्वदा भोग मोक्षदा ॥ १० ॥

भागीरथी मर्त्यलोके पाताले भोगवत्यपि ।
त्रैलोक्य वाहिनी देवी स्थानत्रय निवासिनी ॥ ११ ॥

भूर्लोकस्था त्वमेवासि धरित्री लोकधारिणी ।
भुवर्लोके वायुशक्तिः स्वर्लोके तेजसां निधिः ॥ १२ ॥

महर्लोके महासिद्धिर् जनलोके ऽ जनेत्यपि ।
तपस्विनी तपोलोके सत्यलोके तु सत्यवाक् ॥ १३ ॥

कमला विष्णुलोके च गायत्री ब्रह्मलोकगा ।
रुद्रलोके स्थिता गौरी हरार्धाङ्ग निवासिनी ॥ १४ ॥

अहमो महतश्चैव प्रकृतिस् त्वं हि गीयसे ।
साम्यावस्थात्मिका त्वं हि शबल ब्रह्म रूपिणी ॥ १५ ॥

ततः परा पराशक्तिः परमा त्वं हि गीयसे ।
इच्छा शक्तिः क्रिया शक्तिर् ज्ञानशक्तिस् त्रिशक्तिदा ॥ १६ ॥

गंगा च यमुना चैव विपाशा च सरस्वती ।
सरयू रेविका सिन्धुर् नर्मदैरावती तथा ॥ १७ ॥

गोदावरी शतद्रुश्च कावेरी देवलोकगा ।
कौशिकी चन्द्रमा चैव वितस्ता च सरस्वती ॥ १८ ॥

गण्डकी तापिनी तोया गोमती वेत्रवत्यपि ।
इडा च पिंगला चैव सुषुम्णा च तृतीयका ॥ १९ ॥

गांधारी हस्तिजिह्वा च पूषा ऽ पूषा तथैव च ।
अलम्बुषा कुहूश्चैव शंखिनी प्राणवाहिनी ॥ २० ॥

नाडी च त्वं शरीरस्था गीयसे प्राक्तनैर् बुधैः ।
हृद् पद्मस्था प्राणशक्तिः कण्ठस्था स्वप्न नायिका ॥ २१ ॥

तालुस्था त्वं सदाधारा बिन्दुस्था बिन्दुमालिनी ।
मूले तु कुण्डली शक्तिर् व्यापिनी केशमूलगा ॥ २२ ॥

शिखामध्यासना त्वं हि शिखाग्रे तु मनोन्मणी ।
किमन्यद् बहुनोक्तेन यत् किंचिज् जगतीत्रये ॥ २३ ॥

तत् सर्वं त्वं महादेवी श्रिये संध्ये नमो ऽ स्तु ते ।

**फलश्रुतिः ॥**

इतीदं कीर्तिदं स्तोत्रं संध्यायां बहु पुण्यदम् ॥ २४ ॥

महापाप प्रशमनं महासिद्धि विधायकम् ।
य इदं कीर्तयेत् स्तोत्रं संध्याकाले समाहितः ॥ २५ ॥

अपुत्रः प्राप्नुयात् पुत्रं धनार्थी धनं आप्नुयात् ।
सर्व तीर्थ तपो दान यज्ञ योग फलं लभेत् ॥ २६ ॥

भोगान् भुक्त्वा चिरं कालं अन्ते मोक्षं अवाप्नुयात् ।
तपस्विभिः कृतं स्तोत्रं स्नानकाले तु यः पठेत् ॥ २७ ॥

यत्र कुत्र जले मग्नः संध्यामज्जनजं फलम् ।
लभते नात्र संदेहः सत्यं सत्यं तु नारद ॥ २८ ॥

श्रृणुयाद् यो ऽ पि तद् भक्त्या स तु पापात् प्रमुच्यते ।
पीयूष सदृशं वाक्यं संध्योक्तं नारदेरितम् ॥ २९ ॥

---

**॥ इति श्री देवी भागवते द्वादश स्कन्दे श्री गायत्री स्तोत्रम् संपूर्णम् ॥**



# ॥ श्री गायत्री हृदयम् (देवी भागवतम्) ॥

## Sri Gayatri Hrudayam – Devi Bhagavatam

The power of Gayatri Hrudayam can be known by its elaborate Phalashruti available at the end of the Stuti. In a nutshell, chanting Gayatri Hrudayam is said to be equivalent to chanting Gayatri Mantra for 6000 times and clears one of all sins. Proper usage and procedure of the following stuti may be sought from eminent scholars.

नारायण उवाच ।

देव्याश्च हृदयं प्रोक्तं नारदाऽथर्वणे स्फुटम् ।
तदेवाहं प्रवक्ष्यामि रहस्याति रहस्यकम् ॥ १ ॥

विराड् रूपां महादेवीं गायत्रीं वेदमातरम् ।
ध्यात्वा तस्यास् त्वथांगेषु ध्यायेद् एताश्च देवताः ॥ २ ॥

पिण्ड ब्रह्माण्डयोर् ऐक्याद् भावयेद् स्वतनौ तथा ।
देवीरूपे निजे देहे तन्मयत्वाय साधकः ॥ ३ ॥

नादेवो ऽ भ्यर्चयेद् देवं इति वेदविदो विदुः ।
ततोऽभेदाय काये स्वे भावयेद् देवता इमाः ॥ ४ ॥

अथ तत् संप्रवक्ष्यामि तन्मयत्वमथो भवेत् ।
गायत्री हृदयस्यास्या ऽ प्यहमेव ऋषिः स्मृतः ॥ ५ ॥

गायत्रीच्छन्द उद्दिष्टं देवता परमेश्वरी ।
पूर्वोक्तेन प्रकारेण कुर्याद् अंगानि षट् क्रमात् ॥ ६ ॥

आसने विजने देशे ध्यायेद् एकाग्र मानसः ॥ ७ ॥

**अंग न्यासः ॥**

अस्य श्री गायत्री हृदय स्तोत्र महामन्त्रस्य । श्री नारायण ऋषिः । गायत्री छन्दः । परमेश्वरी देवता ॥

| | |
|---|---|
| तत् सवितुः | हृदयाय नमः । |
| वरेण्यम् | शिरसे स्वाहा । |
| भर्गो देवस्य | शिखयै वषट् । |
| धीमहि | कवचाय हुम् । |
| धियो यो नः | नेत्र त्रयाय वौषट् । |

प्रचोदयात् अस्त्राय फट् ।
ॐ भूर्भुवस्सुवरोम् इति दिग् बन्धः ॥

**अथार्थ न्यासः**

द्यौर् मूर्ध्नि दैवतम्। दन्त पङ्क्तावश्विनौ। उभे सन्ध्ये चोष्टौ। मुखमग्निः। जिह्वा सरस्वती। ग्रीवायां तु बृहस्पतिः। स्तनयोर् वसवो ऽ ष्टौ। बाहुवोर् मरुतः। हृदये पर्जन्यः। आकाशमुदरम्। नाभावन्तरिक्षम्। कट्योर् इन्द्राग्नी। जघने विज्ञानघनः प्रजापतिः। कैलासमलये ऊरू। विश्वेदेवा जान्वोः। जंघायां कौशिकः। गुह्यमयने। ऊरू पितरः। पादौ पृथिवी। वनस्पतयो अंगुलीषु। ऋषयो रोमाणि। नखानि मुहूर्तानि। अस्थिषु ग्रहाः। असृङ् मांसं ऋतवः। संवत्सरा वै निमिषम्। अहोरात्रावादित्यश् चन्द्रमाः।

**श्री गायत्री हृदयम्॥**

**प्रवरां दिव्यां गायत्रीं शरणमहं प्रपद्ये ॥**
**ॐ तत् सवितुर् वरेण्याय नमः। ॐ तत् पूर्वाजाय नमः।**
**तत् प्रातरादित्याय नमः। तत् प्रातरादित्य प्रतिष्ठायै नमः॥**

**फलश्रुतिः ॥**

प्रातरधीयानो रात्री कृत पापं नाशयति। सायमधीयानो दिवस कृत पापं नाशयति। सायं प्रातरधीयानो अपापो भवति। सर्व तीर्थेषु स्नातो भवति। सर्वैर् देवैर् ज्ञातो भवति। अवाच्य वचनात् पूतो भवति। अभक्ष्य भक्षणात् पूतो भवति। अभोज्य भोजनात् पूतो भवति। अचोष्य चोषणात् पूतो भवति। असाध्य साधनात् पूतो भवति। दुष् प्रतिग्रह शत सहस्रात् पूतो भवति। सर्व प्रतिग्रहात् पूतो भवति। पङ्क्ति दूषणात् पूतो भवति। अनृत वचनात् पूतो भवति। अथा ऽ ब्रह्मचारी ब्रह्मचारी भवति। अनेन हृदयेनाधीतेन क्रतु सहस्रेणेष्टं भवति। षष्टि सहस्र गायत्र्या जप्यानि फलानि भवन्ति। अष्टौ ब्राह्मणान् सम्यग्ग्राहयेत्। तस्य सिद्धिर् भवति। य इदं नित्यमधीयानो ब्राह्मणः प्रातः शुचिः सर्व पापैः प्रमुच्यत इति। ब्रह्मलोके महीयते। इत्याह भगवान् श्रीनारायणः॥

नारद उवाच ।

स्वामिन् सर्व जगन्नाथ संशयो ऽ स्ति मम प्रभो ।
चतुष् षष्ठि कळाबिज्ञ पादुका योगविद्वर ॥ १ ॥

मुच्यते केन पुण्येन ब्रह्म रूपः कथं भवेत् ।
देहश्च देवता रूपो मन्त्र रूपो विशेषतः ॥ २ ॥

कर्म श्रोतुं इच्छामि न्यासं च विधि पूर्वकम् ।
ऋषिश् छन्दो दैवतं च ध्यानं च विधिवत् प्रभो ॥ ३ ॥

नारायण उवाच ।

अस्त्येकं परमं गुह्यं गायत्री कवचं तथा ।
पठनाद् धारणात् मर्त्यः सर्व पापैः प्रमुच्यते ॥ ४ ॥

सर्वान् कामान् अवाप्नोति देवी रूपश्च जायते ।
गायत्री कवचस्यास्य ब्रह्म विष्णु महेश्वराः ॥ ५ ॥

ऋषयो ऋग् यजुस् साम अथर्वश् च्छन्दांसि नारद ।
ब्रह्म रूपा देवतोक्ता गायत्री परमा गळा ॥ ६ ॥

तद् बीजं भर्ग इत्येषा शक्तिर् उक्ता मनीषिभिः ।
कीलकं च धियः प्रोक्तं मोक्षार्थे विनियोजनम् ॥ ७ ॥

चतुर्भिः हृदयं प्रोक्तं चहुर्भिस् तु शिरः स्मृतम् ।
पञ्चभिः स्यात् शिखा पश्चात् त्रिभिस् तु कवचं स्मृतम् ॥ ८ ॥

चतुर्भिः नेत्रं उत्थिष्ठं चतुर्भिः स्यात् तद् अस्त्रकम् ।
अत ध्यानं प्रवक्ष्यामि साधका ऽ भीष्ट दायकम् ॥ ९ ॥

## ॥ विनियोजनम् ॥

अस्य श्री गायत्री कवच स्तोत्र महामन्त्रस्य। ब्रह्म विष्णु महेश्वराः ऋषयः। ऋग् यजुः सामा ऽ थर्वाणि छन्दांसि। परब्रह्म स्वरूपिणी गायत्री देवता। तद् बीजम्। भर्गः शक्तिः। धियः कीलकम्। मोक्षार्थे जपे विनियोगः॥

## ॥ न्यासः ॥

| | |
|---|---|
| ॐ तत् सवितुः | हृदयाय नमः। |
| ॐ वरेण्यं | शिरसे स्वाहा। |
| ॐ भर्गो देवस्य | शिखायै वषट्। |
| ॐ धीमहि | कवचाय हुम्। |
| ॐ धियो यो नः | नेत्र त्रयाय वौषट्। |
| ॐ प्रचोदयात् | अस्त्राय फट्। |
| ॐ भूर्भुवस्सुवरोम् | इति दिग् बन्धः॥ |

## ॥ ध्यानम् ॥

**मुक्ता विद्रुम हेम नील धवलच् छायैर् मुखैस् त्रीक्षणैः**
**युक्तां इन्दु निबद्ध रत्न मकुटां तत्त्वार्थ वर्णात्मिकाम्।**
**गायत्रीं वरदा ऽ भया ऽ ङ्कुश कशाः शुभ्रं कपालं गुणं।**
**शङ्खं चक्रमथा ऽ रविन्द युगलं हस्तैर् वहन्तीं भजे॥**

## ॥ कवचम् ॥

गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे।
ब्रह्म सन्ध्या तु मे पश्चाद् उत्तरायां सरस्वती॥ १॥

पार्वती मे दिशं रक्षेत् पावकीं जल शायिनी।
यातुधानी दिशं रक्षेत् यातुधान भयंकरी॥ २॥

पावमानीं दिशं रक्षेत् पवमान विलासिनी।
दिशं रौद्रीं च मे पातु रूद्राणी रूद्र रूपिणी॥ ३॥

ब्रह्माण्यूर्ध्वं तु मे रक्षेद् अधस्ताद् वैष्णवी तथा।
एवं दश दिशो रक्षेत् सर्वाङ्गं भुवनेश्वरी॥ ४॥

तत् पदं पातु मे पादौ जङ्घे मे सवितुः पदम् ।
वरेण्यं कटि देशे तु नाभिं भर्गस् तथैव च ॥ ५ ॥

देवस्य मे तद्धृदयं धीमहीति च गळम् ।
धियः पदं च मे नेत्रे यः पदं मे ललाटकम् ॥ ६ ॥

नः पातु मे पदं मूर्ध्नि शिखायां मे प्रचोदयात् ।
तत् पदं पातु मूर्धानं सकारः पातु भालकम् ॥ ७ ॥

चक्षुषी तु विकारार्णस् तु कारस्तु कपोलयोः ।
नासापुटं वकारार्णो रेकारस् तु मुखे तथा ॥ ८ ॥

णिकार ऊर्ध्वं ओष्ठां तु यकारस्त्वधरोष्ठकम् ।
आस्य मध्ये भकारार्णोर् गोकारश् चिबुके तथा ॥ ९ ॥

देकारः कण्ठ देशे तु वकारः स्कन्ध देशकम् ।
स्यकारो दक्षिणं हस्तं धीकारो वाम हस्तकम् ॥ १० ॥

मकारो हृदयं रक्षेद् हिकार उदरे तथा ।
धिकारो नाभि देशे तु योकारस् तु कटिं तथा ॥ ११ ॥

गुह्यं रक्षतु योकार ऊरू द्वौ नः पदाक्षरम् ।
प्रकारो जानुनी रक्षेच् चोकारो जङ्घ देशकम् ॥ १२ ॥

दकारो गुल्फ देशे तु याकारः पाद युग्मकम् ।
तकारो व्यञ्जनं चैव सर्वाङ्गे मे सदा ऽ वतु ॥ १३ ॥

**॥ फलश्रुतिः ॥**

इदं तु कवचं दिव्यं बाधाशत विनाशनम् ।
चतुः षष्टि कला विद्या दायकं मोक्ष कारकम् ॥ १४ ॥

मुच्यते सर्व पापेभ्यः परं ब्रह्माधिगच्छति ।
पठनात् श्रवणात् वा ऽ पि गो सहस्र फलं लभेत् ॥ १५ ॥

**॥ इति देवी भागवते द्वादश स्कन्दे गायत्री कवचं संपूर्णम् ॥**



# ॥ श्री गायत्री अष्टकम् (श्री शंकराचार्य विरचितम् ) ॥
## Sri Gayatri Ashtakam – Sri. Shankaracharya

विश्वामित्रपः फलां प्रियतरां विप्रालि संसेवितां।
नित्या ऽ नित्य विवेकदां स्मित मुखीं खण्डेन्दु भूषोज्ज्वलाम्।
ताम्बूलारुण भासमान वदनां मार्ताण्ड मध्य स्थितां।
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम्॥ १॥

जाती पङ्कज केतकी कुवलयैः संपूजिताङ्घ्रिद्वयां।
तत्त्वार्थात्मिक वर्ण पङ्क्ति सहितां तत्त्वार्थ बुद्धि प्रदाम्।
प्राणायाम परायणैर् बुधजनैः संसेव्यमानां शिवां।
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम्॥ २॥

मञ्जीर ध्वनिभिः समस्त जगतां मञ्जुत्व संवर्धनीं।
विप्र प्रेङ्खित वारिवारित महा रक्षो गणां मृण्मयीम्।
जप्तुः पापहरां जपाकुसुम निभां हंसेन संशोभितां।
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम्॥ ३॥

काञ्ची चेल विभूषितां शिवमयीं मालार्ध मालादिकान्।
बिभ्राणां परमेश्वरीं शरणदां मोहान्ध बुद्धिच्छिदाम्।
भूरादि त्रिपुरां त्रिलोक जननीं अध्यात्म शाखानुताम्।
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम्॥ ४॥

ध्यातुर् गर्भ कृशानु ताप हरणां सामात्मिकां सामगाम्।
सायंकाल सुसेवितां स्वरमयीं दूर्वादल श्यामलाम्।
मातुर्दास्य विलोचनैक मतिमत् खेटीन्द्र संराजितां।
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम्॥ ५॥

सन्ध्या राग विचित्र वस्त्र विलसद् विप्रोत्तमैः सेवितां।
ताराहीर सुमालिकां सुविलसद् रत्नेन्दु कुम्भान्तराम्।
राका चन्द्र मुखीं रमापति नुतां शङ्खादि भास्वत् कराम्।
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम्॥ ६॥

वेणी भूषित मालकध्वनिकरैः भृङ्गैः सदा शोभिताम् ।
तत्त्व ज्ञान रसायनज्ञ रसनासौधभ्रमद् भ्रामरीम् ।
नासालंकृत मौक्तिकेन्दु किरणैः सायंतमश् छेदिनीम् ।
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ ७ ॥

पादाब्जान्तर रेणु कुङ्कुम लसत् फालद्युरामावृताम् ।
रम्भा नाटय विलोकनैक रसिकां वेदान्त बुद्धि प्रदाम् ।
वीणा वेणु मृदङ्ग काहलरवान् देवैः कृताञ्छृण्वतीम् ।
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ ८ ॥

हत्यापान सुवर्ण तस्कर महागुर्वङ्गनासंगमान् ।
दोषाञ्छैलसमान् पुरंदर समाः संच्छिद्य सूर्योपमाः ।
गायत्रीं श्रुति मातुरेक मनसा सन्ध्यासु ये भूसुरा ।
जप्त्वा यान्ति परां गतिं मनुमिमं देव्याः परं वैदिकाः ॥ ९ ॥

॥ इति श्रीमत् शंकराचार्य विरचितं गायत्र्यष्टकं संपूर्णम् ॥



## ॥ श्री गायत्री भुजङ्ग स्तोत्रम् (श्री शंकराचार्य विरचितम् ) ॥

**Sri Gayatri Bhujanga Stotram – Sri. Shankaracharya**

उषः कालगम्यां उदात्त स्वरूपां
अकार प्रविष्टां उदारांग भूषाम् ।
अजेशादि वन्द्यां अजार्चाङ्ग भाजां
अनौपम्य रूपां भजाम्यादि संध्याम् ॥ १ ॥

सदा हंसयानां स्पुरद् रत्न वस्त्रां
वरा भीति हस्तां खगाम्नाय रूपाम् ।
स्फुरत् स्वाधिकां अक्षमालां च कुम्भं
दधानां अहं भावये पूर्व संध्याम् ॥ २ ॥

प्रवाळ प्रकृष्टाङ्ग भूषोज्ज्वलन्तीं
सकीटोल्लसद् रत्न राज प्रभाताम् ।
विशालोरु भासां कुचाश्लेश हारां
भजे बालिकां ब्रह्म विद्यां विनोदाम् ॥ ३ ॥

स्फुरच् चंद्र कांतां शरच् चंद्र वक्त्रां
महा चंद्र कान्ताद्रि पीनस्तनाढ्याम् ।
त्रिशूलाक्ष हस्तां त्रिनेत्रस्य पत्नीं
वृषारूढ पादां भजे मध्य संध्याम् ॥ ४ ॥

षडाधार रूपां षडाधार गंयां
षडद्वाति शुद्धां यजुर्वेद रूपाम् ।
हिमाद्रेः सुतां कुन्द दन्ताव भासां
महेशार्ध देहां भजे मध्य सन्ध्याम् ॥ ५ ॥

सुषुम्ना ऽ न्तरस्थां सुधा सेव्यमानां
उकारान्तरस्थां द्वितिय स्वरूपां ।
सहस्रार्क रश्मि प्रभास त्रिनेत्रां
सदा यौवनाढ्यां भजे मध्य सन्ध्यां ॥ ६ ॥

सदा सामगानां प्रियां श्यामलाङ्गीं
अकारान्तरस्थां करोल्लासि चक्राम् ।
गदा पद्म हस्तां त्वनत् पांचजन्यां
खगेशोपविष्टां भजेमास्त संध्याम् ॥ ७ ॥

प्रगल्भ स्वरूपां स्फुरत् कङ्कणाढ्यां
अहं लंबमान स्तन प्रान्त हाराम् ।
महा नील रत्न प्रभा कुंडलाभ्यां
स्फुरत् स्मेर वक्त्रां भजे तुर्य सन्ध्याम् ॥ ८ ॥

सदा तत्त्वमस्याधि वाग्यैग् गंयां
महा मोक्ष मार्गैक पादेय रूपाम् ।
महासिद्ध विद्याधरैः सेव्यमानां
भजेहम् भवोद्धारिणीम् तुर्य सन्ध्याम् ॥ ९ ॥

हृदंभोज मध्ये पराम्नायनीडे
सुखासीन सद्राज हंसां मनोज्ञाम् ।
सदा हेमभासां त्रयीमध्य विद्यां
भजामस् स्तुवामो वदामः स्मरामः ॥ १० ॥

सदा तत्पदे स्तूयमानां सवित्रीं
वरेण्यां महा भर्ग रूपां त्रिनेत्राम् ।
सदा देवदेवादि देवस्य पत्नीं
अहं धीमहीत्यादि पादैक जुष्टाम् ॥ ११ ॥

अनाथं दरिद्रं दुराचार युक्तं
शटं स्थूल बुद्धिं खलं धर्महीनं ।
त्रिसंध्यं जप ध्यान हीनं महेशीं
परं चिन्तयामि प्रसीद त्वमेव ॥ १२ ॥

**फलश्रुतिः ।**

इतीदं भुजङ्गं पठेद् यस्तु भक्त्या
समादाय चित्ते सदा श्रीभवानीम् ।
त्रिसन्ध्य स्वरूपां त्रिलोकैक वन्द्यां
स मुक्तो भवेत् सर्व पापैर् अजस्त्रम् ॥ १३ ॥

**॥ इति श्री गायत्री भुजङ्ग स्तोत्रम् सम्पूर्णम् ॥**



## ॥ श्री गायत्री स्तोत्रम् (वसिष्ठ संहिता ) ॥

## Sri Gayatri Stotram – Vasishta Samhita

नमस्ते देवी गायत्री सावित्री त्रिपदे ऽ क्षरे ।
अजरे ऽ मरे मातः  त्राहि मां भव सागरात् ॥ १ ॥

नमस्ते सूर्य संकाशे सूर्यवावित्रिके ऽ मले ।
ब्रह्म विद्ये महा विद्ये वेद मातः नमो ऽ स्तु ते ॥ २ ॥

अनन्त कोटि ब्रह्माण्ड व्यापिनी ब्रह्मचारिणी ।
नित्यानन्दे महामाये परेशानी नमो ऽ स्तु ते ॥ ३ ॥

त्वं ब्रह्मा त्वं हरिः साक्षात् रुद्रः त्वं इन्द्र देवता ।
मित्रस् त्वं वरुणस् त्वं च त्वं अग्निर् अश्विनौ भगः ॥ ४ ॥

पूषा ऽ र्यमा मरुत्वांश्व ऋषयो ऽ पि मुनीश्वराः ।
पितरो नागा यक्षाश्व गन्धर्वा ऽ प्सरसां गणाः ॥ ५ ॥

रक्षो भूत पिशाचाश्व त्वमेव परमेश्वरी ।
ऋग् यजुस् साम विद्याश्व ह्यथर्वा ऽ ङ्गिरसानि च ॥ ६ ॥

त्वमेव सर्व शास्त्राणि त्वमेव सर्व संहिताः ।
पुराणानि च तन्त्राणि महा ऽ गम मतानि च ॥ ७ ॥

त्वमेव पञ्च भूतानि तत्त्वानि जगदीश्वरी ।
ब्राह्मी सरस्वती सन्ध्या तुरीया त्वं महेश्वरी ॥ ८ ॥

तत् सद् ब्रह्म स्वरूपा त्वं किञ्चित् सदसदात्मिका ।
परात्परेशी गायत्री नमस्ते मातरम्बिके ॥ ९ ॥

चन्द्रे कलात्मिके नित्ये कालरात्री स्वधे स्वरे ।
स्वाहाकारे अग्नि वक्त्रे त्वां नमामि जगदीश्वरी ॥ १० ॥

नमो नमस्ते गायत्री सावित्री त्वां नमाम्यहम् ।
सरस्वती नमस्तुभ्यं तुरीये ब्रह्म रूपिणी ॥ ११ ॥

अपराध सहस्राणि त्वसत् कर्म शतानि च ।
मत्तो जातानि देवेशी त्वं क्षमस्व दिने दिने ॥ १२ ॥

Srimad Valmiki Ramayanam contains 24,000 Slokas (verses). Sri. Gayatri Maha Mantra contains 24 aksharas (syllables). Sri. Valmiki Maharishi has composed Srimad Ramayanam in such a way that these aksharas are used as the starting syllable for every 1000th verse. Those 24 slokas which contain the Sri. Gayatri Mantra aksharas are known as Gayatri Ramayanam and are given below. It is believed that chanting Gayatri Ramayanam gives the benefit of chanting both Gayatri Mantra and Valmiki Ramayana.

तपस् स्वाध्याय निरतं तपस्वी वाग्वितां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर् मुनि पुङ्गवम् ॥ १ ॥

स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघु नन्दनः ।
ऋषिभिः पूजितः संयग् यथेन्द्रो विजयी पुरा ॥ २ ॥

विश्वामित्रः स धर्मात्मा श्रुत्वा जनक भाषितम् ।
वत्स राम धनुः पश्य इति राघवं अब्रवीत् ॥ ३ ॥

तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ।
शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत ॥ ४ ॥

वनवासं हि सङ्ख्याय वासाम्यस्या ऽ भरणानि च ।
भर्तारं अनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ ५ ॥

राजा सत्यं च धर्मं च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ६ ॥

निरीक्ष्य सुमुहूर्तं तु ददर्श भरतो गुरुम् ।
उटजे राममासीनं जटावल्कल धारिणम् ॥ ७ ॥

यदि बुद्धिः कृता द्रष्टुं अगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशः ॥ ८ ॥

भरतस्या ऽ र्य पुत्रस्य श्वश्रूणां मम च प्रभो ।
मृग रूपं इदं व्यक्तं विस्मयं जनयिष्यति ॥ ९ ॥

गच्छ शीघ्रं इदो राम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रं इतो गत्वा ऽ द्य राघव ॥ १० ॥

देश कालौ प्रतीक्षस्व क्षममाणः प्रिया ऽ प्रिये ।
सुख दुःख सहः काले सुग्रीव वशगो भव ॥ ११ ॥

वन्द्यास्ते तु तपस् सिद्धाः तापसा वीतकल्मषाः ।
प्रष्टव्या चा ऽ पि सीतायाः प्रवृत्तिर् विनयान्वितैः ॥ १२ ॥

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां काम रूपिणीम् ।
विक्रमेण महातेजा हनुमान् कपि सत्तमः ॥ १३ ॥

धन्या देवास् स गन्धर्वाः सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीव लोचनम् ॥ १४ ॥

मङ्गला ऽ भिमुखी तस्य सा तदासीन् महाकपेः ।
उपतस्थे विशालाक्षी प्रयता हव्य वाहनम् ॥ १५ ॥

हितं महा ऽ र्थम् मृदु हेतु संहितं
व्यतीत कालायति संप्रति क्षमम् ।
निशम्य तद् वाक्यं उपस्तिथ ज्वरः
प्रसङ्गवान् उत्तरं एतद् अब्रवीत् ॥ १६ ॥

धर्मात्मा रक्षसां श्रेष्टः संप्राप्तो ऽ यं विभीषणः ।
लङ्कैश्वर्यं ध्रुवं श्रीमान् अयं प्राप्नोत्यकण्टकम् ॥ १७ ॥

यो वज्रपाता शनि सन्निपातात्
न चक्षुभे नापि चचाल राजा ।
स राम बाणा ऽ भिहतो बृशार्तः
चचाल चापं च मुमोच वीरः ॥ १८ ॥

यस्य विक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायणं अनामयम् ॥ १९ ॥

न ते ददृशिरे रामं दहन्तं अरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २० ॥

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेदं उवाचा ऽ ग्नि समीपतः ॥ २१ ॥

चलनात् पर्वतेन्द्रस्य गणा देवाश्च कंपिताः ।
चचाल पार्वती चापि तदा ऽ श्लिष्टा महेश्वरम् ॥ २२ ॥

दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादन भोजनम् ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वरः ॥ २३ ॥

यामेव रात्रीं शत्रुघ्नः पर्णशालां उपाविशत् ।
तामेव रात्रीं सीता ऽ पि प्रसूता दारकद्वयम् ॥ २४ ।

**फलश्रुतिः ।**

इदं रामायणम् कृत्स्नं गायत्री बीज सम्युतम् ।
त्रिसन्ध्यं यः पठेन् नित्यं सर्व पापैः प्रमुच्यते ॥ २५ ॥

---

**॥ इति श्री गायत्री रामायणम् सम्पूर्णम् ॥**

श्री जानिर् अद्रि तनया पतिरब्ज गर्भः सर्वे च दैवत गणाः समहर्षयोऽमी ।
एते भूतनिचयाः समुदीरयन्ति गायत्री लोक विनुते तव सुप्रभातम् ॥ १ ॥

पुष्पोच्चय प्रविलसत् करकंज युग्मां गंगादि दिव्य तटिनी वर तीर देशे ।
ष्वर्घ्यम् समर्पयितुम् अत्र जनास्तवैते गायत्री लोक विनुते तव सुप्रभातम् ॥ २ ॥

कर्णे ऽ मृतम् विकिरता स्वर संचयेन सर्वे द्विजाः श्रुतिगणं समुदीरयन्ति ।
पश्याश्रमासथ वृक्ष तलेषु देवि गायत्री लोक विनुते तव सुप्रभातम् ॥ ४ ॥

गावो महर्षि निचयाश्रम भूमि भागात् गन्तुं वनाय शनकैः शनकैः प्रयान्ति ।
वत्सान् पयो ऽ मृत रसं ननु पाययित्या गायत्री लोक विनुते तव सुप्रभातम् ॥ ४ ॥

शिष्य प्रबोधन परा वर मौनि मुख्याः व्याख्यान्ति वेद गदितं स्फुट धर्म ततत्त्वम् ।
स्वीयाश्रमाङ्गण तलेषु मनोहरेषु गायत्री लोक विनुते तव सुप्रभातम् ॥ ५ ॥

श्रोत्रा ऽ मृतम् श्रुतिरवं कलयन्त एते विस्मृत्य गन्तुं अटवीम् फल लाभ लोभात् ।
वृक्षाग्र भूमिषु वनेषु लसन्ति कीराः गायत्री लोक विनुते तव सुप्रभातम् ॥ ६ ॥

मूर्ति त्रया ऽ त्मकलिते निगम त्रयेण वेद्ये स्वर त्रय परिस्फुटमन्त रूपे ।
तत्त्व प्रबोधन परोपनिषत् प्रपञ्चे गायत्री लोक विनुते तव सुप्रभातम् ॥ ७ ॥

विश्वात्मिके निगम शीर्षवतंस रूपे सर्वा ऽ गमान्तरुदिते वरतैजसात्मन् ।
प्राज्ञात्मिके सृजन पोषण संहृतिस्थे गायत्री लोक विनुते तव सुप्रभातम् ॥ ८ ॥

तुर्यात्मिके सकल तत्त्व गणानतीते आनन्द भोग कलिते परमार्धदत्रि ।
ब्रह्मा ऽ नुभूति वरदे सततं जनानां गायत्री लोक विनुते सुप्रभातम् ॥ ९ ॥

तारस्वरेण मधुरम् परिगीयमाने मन्द्रस्वरेण मधुरेण च मध्यमेन ।
गानात्मिके निखिल लोक मनोज्ञ भावे गायत्री लोक विनुते तव सुपभातम् ॥ १० ॥

पापा ऽ टवी दहन जागृत मानसा त्वं भक्तौघ पालन निरन्तर दीक्षिता ऽ सि ।
त्वय्येव विश्वं अखिलं स्थिरतां उपैति गायत्री लोक विनुते तव सुप्रभातम् ॥ ११ ॥

या वैदिकी निखिल पावन पावनी वाक् या लौकिकी व्यवहृति प्रवणा जनानाम् ।
या काव्य रूप कलिता तव रूपं एताः गायत्री लोक विनुते तव सुप्रभातम् ॥ १२ ॥

दिव्यं विमानमधिरुह्य नभोङ्गणेऽत्र गायन्ति दिव्य महिमानमिमे भवत्याः ।
पश्य प्रसीद निचया दिविजाङ्गनानां गायत्री लोक विनुते तव सुप्रभातम् ॥ १३ ॥

हैमीं रुचं सकल भूमिर् उहाग्र देशेष्वाधाय तत्कृत परोपकृतौ प्रसन्नः ।
भानुः करोत्यवसरे कनकाभिषेकं गायत्री लोक विनुते तव सुप्रभातम् ॥ १४ ॥

दिव्या ऽ पगासु सरसीषु वनी निकुङ्जेषूच्चा वचानि कुसुमानि मनोहराणि ।
पुल्लानि सन्ति परितस्तव पूजनाय गायत्री लोक विनुते तव सुप्रभातम् ॥ १५ ॥

कुर्वन्ति पक्षिनिचयाः कलगानमेते वृक्षाग्रं उन्नत तरासनमाश्रयन्तः ।
देवी त्वदीय महिमान मुदीरयन्तो गायत्री लोक विनुते तव सुप्रभातम् ॥ १६ ॥

विश्वेशी विष्णु भगिनी श्रुति वाक् स्वरूपे तन्मात्रिके निखिल मन्तमय स्वरूपे ।
गानात्मिके निखिल तत्त्व निज स्वरूपे गायत्री लोक विनुते तव सुप्रभातम् ॥ १७ ॥

तेजोमयि त्रिभुवनावन सक्त चित्ते सन्धात्मिके सकल काल कला स्वरूपे ।
मृत्युञ्जये जयिनी नित्य निरन्तरात्मन् गायत्री लोक विनुते तव सुप्रभातम् ॥ १८ ॥

त्वां एव देवी परितो निखिलानि तन्त्राण्याभाति तत्त्वं अखिलं भवतीं विवृण्वत् ।
त्वं सर्वदा ऽ सि तरुणा ऽ रुण दिव्य देहे गायत्री लोक विनुते तव सुप्रभातम् ॥ १९ ॥

नित्या ऽ सि देवी भवती निखिले प्रपञ्चे वन्द्या ऽ सि सर्व भुवनैः सततोद्यतासि ।
धी प्रेरिका ऽ सि भुवनस्य चराचरस्य गायत्री लोक विनुते तव सुप्रभातम् ॥ २० ॥

वन्दामहे भगवतीं भवतीं भवाब्धि सन्तारिणीं त्रिकरणैः करुणा ऽ मृताब्दे ।
संपश्य चिन्मय तनो करुणार्द्र दृष्ट्या गायत्री लोक विनुते तव सुप्रभातम् ॥ २१ ॥

त्वं मातृकामय तनुः परम प्रभावा त्वय्येव देवि परमः पुरुषः पुराणः ।
त्वत्तः समस्त भुवनानि समुल्लसन्ति गायत्री लोक विनुते तव सुप्रभातम् ॥ २२ ॥

त्वं वै प्रसूर् निखिल देव गणस्य देवी त्वं स्तूयसे त्रिषवणं निखिलैश्च लोकैः ।
त्वं देश काल परमार्थ परिस्फुटा ऽ सि गायत्री लोक विनुते तव सुप्रभातम् ॥ २३ ॥

त्वं गाधिसूनु परमर्षि वरेण दृष्टा तेजोमयी सवितुर् आत्ममया ऽ खिलार्था ।
सर्वार्थदा प्रणत भक्त जनस्य शश्वत् गायत्री लोकविनुतो तव सुप्रभातम् ॥ २४ ॥

संकल्प्य लोकं अखिलं मनसैव सूषे कारुण्य भाव कलिता ऽ वसि लोकमाता ।
कोपान्विता तमखिलं कुरुषे प्रलीनं गायत्री लोक विनुते तव सुप्रभातम् ॥ २५ ॥

मुक्ताभ विद्रुम सुवर्ण महेन्द्र नील श्वेत प्रभैर् भुवन रक्षण बुद्धि दीक्षैः ।
वक्त्रैर् युते निगम मातरुदार सत्त्वे गायत्री लोक विनुते तव सुप्रभातम् ॥ २६ ॥

कारुण्य वीचि निचयामल कान्ति कान्तां ब्रह्मादि सर्व दिविजेड्य महा प्रभावाम् ।
प्रीत्या प्रसारय दृशम् मयि लोकमातः गायत्री लोक विनुते तव सुप्रभातम् ॥ २७ ॥

श्री लक्ष्मणादि गुरु सत् करुणैक लब्ध विद्या विनीत मतियानयं आञ्जनेयः ।
संसेवते ऽ त्र भवतीं भुवतीं वचोभिः गायत्री लोक विनुते तव सुप्रभातम् ॥ २८ ॥

---

॥ इति सीतारामाङ्जनेय कवि कृत गायत्री सुप्रभातम् ॥

# श्री गायत्री यंत्र



## Another version of Sri. Gayatri Yantram

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| र्व | स्य | प्र | सि | ज | नः | व | तु |
| रे | धी | चो | सा | र | यो | दे | वि |
| श्शि | व | स्ति | स्स | क्त | श | के | व |
| वो | ल | तो | दा | मु | पा | वः | श्शि |
| जी | श्शि | जी | शि | श | या | जी | व |
| वः | वः | वः | वः | पा | मा | न | शि |
| णि | म | द् | व | रो | यो | र्गो | त्स |
| यं | हि | यात् | दोम् | प | धि | भ | त |





## श्री पर ब्रह्मन्।

ॐ हंस हंसाय विद्महे परम हंसाय धीमहि तन्नो हंसः प्रचोदयात्।
ॐ हंसाय विद्महे परम हंसाय धीमहि तन्नो हंसः प्रचोदयात्।
ॐ परम हंसाय विद्महे महा तत्त्वाय धीमहि तन्नो हंसः प्रचोदयात्।
ॐ परमेश्वराय विद्महे पर तत्त्वाय धीमहि तन्नो ब्रह्मः प्रचोदयात्।

## श्री प्रणवः।

ॐ ओंकाराय विद्महे भवद्राय धीमहि तन्नो प्रणवः प्रचोदयात्।

## श्री गुरुः।

ॐ गुरु देवाय विद्महे परब्रह्मणे धीमहि तन्नो गुरुः प्रचोदयात्।

# Brahma/Sarasvati Gayatri

## श्री ब्रह्मा।

ॐ परमेश्वराय विद्महे पर तत्त्वाय धीमहि तन्नो ब्रह्मा प्रचोदयात्।
ॐ वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि तन्नो ब्रह्मा प्रचोदयात्।
ॐ चतुर्मुखाय विद्महे कमण्डलुधराय धीमहि तन्नो ब्रह्मा प्रचोदयात्।
ॐ चतुर्मुखाय विद्महे हंस रुद्राय धीमहि तन्नो ब्रह्मा प्रचोदयात्।
ॐ हंसारूढाय विद्महे कूर्च हस्ताय धीमहि तन्नो ब्रह्मा प्रचोदयात्।

## श्री सरस्वती।

ॐ वाग्देव्यै च विद्महे विरिङ्चि पत्न्यै च धीमहि तन्नो वाणी प्रचोदयात्।
ॐ वाग्देव्यै च विद्महे ब्रह्म पत्न्यै च धीमहि तन्नो वाणी प्रचोदयात्।
ॐ वाग्देव्यै च विद्महे काम प्रदायै धीमहि तन्नो देवी प्रचोदयात्।
ॐ वाग्देव्यै च विद्महे कामराजाय धीमहि तन्नो देवी प्रचोदयात्।
ॐ सरस्वत्यै विद्महे ब्रह्म पुत्र्यै धीमहि तन्नो सरस्वती प्रचोदयात्।
ॐ कलामय्यै च विद्महे बुद्धि दात्र्यै च धीमहि तन्नो शारदा प्रचोदयात्।

# ॥ सकल देवता गायत्री ॥

## Ganapathy Gayatri

### श्री महागणपति ।

ॐ तत् पुरुषाय विद्महे वक्र तुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात् ।

ॐ एकदन्ताय विद्महे वक्र तुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात् ।

ॐ लंबोदराय विद्महे महोदराय धीमहि तन्नो दन्तिः प्रचोदयात् ।

ॐ महोत्कटाय विद्महे वक्र तुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात् ।

ॐ तत्कराटाय विद्महे हस्ति मुखाय धीमहि तन्नो दन्तिः प्रचोदयात् ।

ॐ वक्र तुण्डाय विद्महे शूर्प कर्णाय धीमहि तन्नो दन्तिः प्रचोदयात् ।

## Vaishnava Gayatri

### श्री महाविष्णुः ।

ॐ नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् ।

### श्री मत्स्यः ।

ॐ तत् पुरुषाय विद्महे महामीनाय धीमहि तन्नो विष्णुः प्रचोदयात् ।

### श्री लक्ष्मी वराहः ।

ॐ धनुर् धराय विद्महे वक्र दंष्ट्राय धीमहि तन्नो वराहः प्रचोदयात् ।

### श्री लक्ष्मी नृसिंहः ।

ॐ वज्र नखाय विद्महे तीक्ष्ण दंष्ट्राय धीमहि तन्नो नारसिंहः प्रचोदयात् ।

ॐ नृसिंहाय विद्महे वज्र नखाय धीमहि तन्नो सिंहः प्रचोदयात् ।

ॐ उग्र सिंहाय विद्महे वज्र नखाय धीमहि तन्नो नृसिंहः प्रचोदयात् ।

### श्री रामः ।

ॐ दाशरथाय विद्महे सीता वल्लभाय धीमहि तन्नो रामः प्रचोदयात् ।

### श्री परशुरामः ।

ॐ जामतग्न्याय विद्महे महावीराय धीमहि तन्नो परशुरामः प्रचोदयात् ।

# ॥ सकल देवता गायत्री ॥

**श्री कृष्णः ।**

ॐ दामोदराय विद्महे रुक्मिणी वल्लभाय धीमहि तन्नो कृष्णः प्रचोदयात् ।
ॐ देवकी नन्दनाय विद्महे वासुदेवाय धीमहि तन्नो कृष्णः प्रचोदयात् ।

**श्री गोपालः ।**

ॐ गोपालाय विद्महे गोपीजन वल्लभाय धीमहि तन्नो गोपालः प्रचोदयात् ।

**श्री लक्ष्मी हयग्रीवः ।**

ॐ वागीश्वराय विद्महे हयग्रीवाय धीमहि तन्नो हंसः प्रचोदयात् ।

**श्री श्रीनिवासः ।**

ॐ निरञ्जनाय विद्महे निराभासाय धीमहि तन्नो श्रीनिवासः प्रचोदयात् ।

**श्री विश्वक्सेनः ।**

ॐ विश्वक्सेनाय विद्महे वेत्र हस्ताय धीमहि तन्नो विश्वक्सेनः प्रचोदयात् ।

**श्री सुदर्शनः ।**

ॐ सुदर्शनाय विद्महे महाज्वालाय धीमहि तन्नो चक्रः प्रचोदयात् ।
ॐ सुदर्शनाय विद्महे ज्वाला चक्राय धीमहि तन्नो चक्रः प्रचोदयात् ।

**श्री गरुडः ।**

ॐ तत् पुरुषाय विद्महे सुवर्ण पक्षाय धीमहि तन्नो गरुडः प्रचोदयात् ।

**श्री आंजनेयः ।**

ॐ आंजनेयाय विद्महे वायु पुत्राय धीमहि तन्नो हनुमान् प्रचोदयात् ।
ॐ आंजनेयाय विद्महे महाबलाय धीमहि तन्नो हनुमान् प्रचोदयात् ।
ॐ अंजनी सुताय विद्महे वायु पुत्राय धीमहि तन्नो मारुतिः प्रचोदयात् ।
ॐ तत् पुरुषाय विद्महे वायु पुत्राय धीमहि तन्नो मारुतिः प्रचोदयात् ।

**श्री लक्ष्मी ।**

ॐ महादेव्यै च विद्महे विष्णु पत्न्यै च धीमहि तन्नो लक्ष्मी प्रचोदयात् ।
ॐ महालक्ष्म्यै च विद्महे विष्णुप्रियै च धीमहि तन्नो लक्ष्मी प्रचोदयात् ।
ॐ महाऽम्बिकायै विद्महे कर्म सिद्धयै च धीमहि तन्नो लक्ष्मी प्रचोदयात् ।

# ॥ सकल देवता गायत्री ॥

**श्री भूमिदेवी ।**

ॐ धनुर्धरायै विद्महे सर्व सिद्ध्यै च धीमहि तन्नो धरा प्रचोदयात् ।
ॐ पृथ्वी देव्यै विद्महे सहस्र मूर्त्यै धीमहि तन्नो पृथ्वी प्रचोदयात् ।

**श्री नीळादेवी ।**

ॐ महादेव्यै च विद्महे विष्णु पत्न्यै च धीमहि तन्नो नीळा प्रचोदयात् ।

**श्री सीता ।**

ॐ जनक नन्दिन्यै विद्महे भूमिजायै धीमहि तन्नो सीता प्रचोदयात् ।
ॐ जनकजायै विद्महे राम प्रियायै धीमहि तन्नो सीता प्रचोदयात् ।

**श्री राधा ।**

ॐ वृषभानुजायै विद्महे कृष्ण प्रियै धीमहि तन्नो राधा प्रचोदयात् ।

**श्री तुलसी ।**

ॐ तुलस्यै विद्महे विष्णु प्रियायै धीमहि तन्नो वृन्दा प्रचोदयात् ।
ॐ तुलस्यै विद्महे त्रिपुरायै धीमहि तन्नो तुलसी प्रचोदयात् ।
ॐ श्रीधरी पुराय विद्महे तुलसी पत्राय धीमहि तन्नो तुलसी प्रचोदयात् ।

## Shiva Gayatri

**श्री शिवः ।**

ॐ महादेवाय विद्महे रुद्र मूर्तये धीमहि तन्नो शिवः प्रचोदयात् ।
ॐ तत् पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।
ॐ तत् पुरुषाय विद्महे महादेवाय धीमहि तन्नो शंकरः प्रचोदयात् ।
ॐ पञ्च वक्त्राय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।
ॐ तत् पुरुषाय विद्महे सहस्राक्षाय महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।
ॐ तन्महेश्वराय वाग्वीसुताय विद्महे धीमहि तन्नो शिवः प्रचोदयात् ।

**श्री दक्षिणामूर्ति ।**

ॐ दक्षिणामूर्तये च विद्महे ध्यानस्थाय धीमहि तन्नो धीशः प्रचोदयात् ।

# ॥ सकल देवता गायत्री ॥

### श्री नन्दीश्वरः।

ॐ तत् पुरुषाय विद्महे चक्र तुण्डाय धीमहि तन्नो नन्दिः प्रचोदयात्।
ॐ तत् पुरुषाय विद्महे नन्दिकेश्वराय धीमहि तन्नो वृषभः प्रचोदयात्।

## Shakti Gayatri

### श्री शक्तिः।

ॐ सर्व संमोहिन्यै विद्महे विश्व जनन्यै धीमहि तन्नो शक्तिः प्रचोदयात्।

### श्री अमृतेश्वरी।

ॐ सौः त्रिपुरदेवी विद्महे शक्तीश्वरी च धीमहि तन्नो अमृता प्रचोदयात्।

### श्री अन्नपूर्णा।

ॐ भगवत्यै च विद्महे महेश्वर्यै च धीमहि तन्नो अन्नपूर्णा प्रचोदयात्।

### श्री बगलामुखी।

ॐ बगलामुख्यै च विद्महे स्तंभिन्यै च धीमहि तन्नो देवी प्रचोदयात्।
ॐ ऐं बगलामुखी विद्महे ॐ क्लीं कण्ठेश्वरी धीमहि ॐ सौः तन्नो ब्रह्लीं प्रचोदयात्।

### श्री भैरवी।

ॐ त्रिपुरायै च विद्महे भैरव्यै धीमहि तन्नो देवी प्रचोदयात्।

### श्री भुवनेश्वरी।

ॐ नारायण्यै विद्महे भुवनेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्।

### श्री ब्राह्मी।

ॐ हंस ध्वजाय विद्महे कूर्च हस्तायै धीमहि तन्नो ब्राह्मी प्रचोदयात्।

### श्री देवी।

ॐ देव्यै ब्रह्म मालिन्यै विद्महे शक्त्यै च धीमहि तन्नो देवी प्रचोदयात्।

### श्री दूमावती।

ॐ दूमावत्यै च विद्महे संहारिण्यै च धीमहि तन्नो दूमा प्रचोदयात्।

# ॥ सकल देवता गायत्री ॥

## श्री दुर्गा।

ॐ कात्यायनाय विद्महे कन्य कुमारी धीमहि तन्नो दुर्गिः प्रचोदयात्।
ॐ महादेव्यै च विद्महे दुर्गा देव्यै च धीमहि तन्नो देवी प्रचोदयात्।
ॐ गिरिजायै विद्महे शिव प्रियायै धीमहि तन्नो दुर्गा प्रचोदयात्।
ॐ नारायण्यै विद्महे दुर्गायै च धीमहि तन्नो गौरी प्रचोदयात्।

## श्री गौरी।

ॐ महादेवी च विद्महे रुद्र पत्नी च धीमहि तन्नो गौरी प्रचोदयात्।
ॐ शुभकायै विद्महे काममालिन्यै धीमहि तन्नो गौरी प्रचोदयात्।

## श्री काळी।

ॐ आद्यायै विद्महे परमेश्वर्यै धीमहि तन्नो काळी प्रचोदयात्।
ॐ महा काळ्यै च विद्महे स्मशान वासिन्यै च धीमहि तन्नो काळी प्रचोदयात्।
ॐ कालिकायै विद्महे स्मशान वासिन्यै धीमहि तन्नो अघोरा प्रचोदयात्।

## श्री कामधेनु।

ॐ शुभकायै विद्महे काम दात्राय च धीमहि तन्नो धेनुः प्रचोदयात्।

## श्री चामुण्डा।

ॐ पिशाश ध्वजायै विद्महे शूल हस्ताय धीमहि तन्नो काळी प्रचोदयात्।

## श्री चण्डी।

ॐ चण्डीश्वर्यै च विद्महे महादेव्यै च धीमहि तन्नो चण्डी प्रचोदयात्।
ॐ चण्डेशण्डाय विद्महे चण्डेश्वराय धीमहि तन्नो चण्डिः प्रचोदयात्।

## श्री चिन्नमस्ता।

ॐ वैरोचन्यै च विद्महे चिन्नमस्तायै धीमहि तन्नो देवी प्रचोदयात्।

## श्री द्वरिता।

ॐ द्वरितायै विद्महे महामित्याय धीमहि तन्नो देवी प्रचोदयात्।

## श्री इन्द्राणी।

ॐ गज ध्वजायै विद्महे हस्त्यैः धीमहि तन्नो इन्द्राणी प्रचोदयात्।

# ॥ सकल देवता गायत्री ॥

**श्री इन्द्राक्षी ।**

ॐ भस्मायुधाय विद्महे रक्त नेत्राय धीमहि तन्नो ज्वरहरः प्रचोदयात् ।

**श्री कामेश्वरी ।**

ॐ क्लीं त्रिपुर देव्यै विद्महे कामेश्वर्यै धीमहि तन्नो क्लीने प्रचोदयात् ।

**श्री कौमारी ।**

ॐ चिकि ध्वजाय विद्महे शक्ति हस्तायै धीमहि तन्नो कौमारी प्रचोदयात् ।

**श्री महामारी ।**

ॐ पिशाच ध्वजाय विद्महे कटि हस्ताय धीमहि तन्नो मारी प्रचोदयात् ।

**श्री महेश्वरी ।**

ॐ वृष ध्वजाय विद्महे मरुग हस्ताय धीमहि तन्नो रौद्री प्रचोदयात् ।

**श्री महिषमर्दिनी ।**

ॐ महिषमर्दिन्यै विद्महे दुर्गायै च धीमहि तन्नो देवी प्रचोदयात् ।

**श्री मातंगी ।**

ॐ मातंग्यै चक्र विद्महे उच्छिष्ट चण्डाल्यै धीमहि तन्नो देवी प्रचोदयात् ।

**श्री शूलिनी ।**

ॐ ज्वालामालिनी विद्महे महाशूलिनी धीमहि तन्नो दुर्गा प्रचोदयात् ।

ॐ तं ज्वालामालिनी विद्महे महाशूलिनी धीमहि तन्नो दुर्गिः प्रचोदयात् ।

**श्री श्यामा ।**

ॐ ऐं सुख प्रियायै विद्महे कामेश्वरी धीमहि तन्नो श्यामा प्रचोदयात् ।

**श्री तारा ।**

ॐ तारायै च विद्महे मनोगृहायै धीमहि तन्नो देवी प्रचोदयात् ।

**श्री त्रिपुर सुन्दरी ।**

ॐ ऐं त्रिपुर देव्यै विद्महे क्लीं कामेश्वर्यै सौ धीमहि तन्नो क्लीन्ने प्रचोदयात् ।

ॐ वागभवेश्वरी विद्महे कामेश्वरी च धीमहि तन्नो शक्तिः प्रचोदयात् ।

## ॥ सकल देवता गायत्री ॥

**श्री वैष्णवी ।**

ॐ तार्क्ष्य ध्वजाय विद्महे चक्र हस्तायै धीमहि तन्नो वैष्णवी प्रचोदयात् ।

**श्री वाग्भवी ।**

ॐ ऐं त्रिपुर देवी विद्महे वाग्भवेश्वरी धीमहि तन्नो मुक्तिः प्रचोदयात् ।

**श्री वाराही ।**

ॐ महिष ध्वजायै विद्महे दन्द हस्तायै धीमहि तन्नो वाराही प्रचोदयात् ।

## Subrahmanya/Kaumara Gayatri

**श्री सुब्रह्मण्यः ।**

ॐ तत् पुरुषाय विद्महे महासेनाय धीमहि तन्नो स्कन्दः प्रचोदयात् ।

ॐ षण्मुखाय विद्महे महासेनाय धीमहि तन्नो शास्तः प्रचोदयात् ।

## Other Deities Gayatri

**श्री दत्तात्रेयः ।**

ॐ दत्तात्रेयाय विद्महे अत्रि पुत्राय धीमहि तन्नो दत्तः प्रचोदयात् ।

ॐ दत्तात्रेयाय विद्महे दिगंबराय धीमहि तन्नो दत्तः प्रचोदयात् ।

ॐ दिगंबराय विद्महे योगारूढाय धीमहि तन्नो दत्तः प्रचोदयात् ।

**श्री शास्ता ।**

ॐ भूताधिपाय विद्महे देवाय धीमहि तन्नो शास्ता प्रचोदयात् ।

ॐ भूतनाथाय विद्महे भव पुत्राय धीमहि तन्नो शास्ता प्रचोदयात् ।

**श्री कार्तवीर्यः ।**

ॐ कार्तवीर्याय विद्महे महावीराय धीमहि तन्नो अर्जुनः प्रचोदयात् ।

## Navagraha Gayatri

### श्री सूर्यः।

ॐ प्रभाकराय विद्महे दिवाकराय धीमहि तन्नो सूर्यः प्रचोदयात्।
ॐ भास्कराय विद्महे महाद्युतिकराय धीमहि तन्नो आदित्यः प्रचोदयात्।
ॐ अश्व ध्वजाय विद्महे पाश हस्ताय धीमहि तन्नो सूर्यः प्रचोदयात्।
ॐ आदित्याय विद्महे दिवाकराय धीमहि तन्नो सूर्यः प्रचोदयात्।

### श्री चन्द्रः।

ॐ पद्म ध्वजाय विद्महे हेम रूपाय धीमहि तन्नो सोमः प्रचोदयात्।
ॐ क्षीरपुत्राय विद्महे अमृत तत्त्वाय धीमहि तन्नो चन्द्रः प्रचोदयात्।

### श्री अंगारकः।

ॐ वीर ध्वाजाय विद्महे विघ्न हस्ताय धीमहि तन्नो भौमः प्रचोदयात्।

### श्री बुधः।

ॐ गज ध्वजाय विद्महे शुख हस्ताय धीमहि तन्नो बुधः प्रचोदयात्।
ॐ क्षिति पुत्राय विद्महे रोहिणी प्रियाय धीमहि तन्नो बुधः प्रचोदयात्।

### श्री गुरुः।

ॐ वृषभ ध्वजाय विद्महे गृणि हस्ताय धीमहि तन्नो गुरुः प्रचोदयात्।
ॐ आङ्गिरसाय विद्महे दिव्य देहाय धीमहि तन्नो जीवः प्रचोदयात्।

### श्री शुक्रः।

ॐ अश्व ध्वजाय विद्महे धनुर् हस्ताय धीमहि तन्नो शुक्रः प्रचोदयात्।
ॐ भ्रृगुजाय विद्महे दिव्य देहाय धीमहि तन्नो शुक्रः प्रचोदयात्।

### श्री शनैश्चरः।

ॐ काक ध्वजाय विद्महे खड्ग हस्ताय धीमहि तन्नो मन्दः प्रचोदयात्।
ॐ भाग भावाय विद्महे मृत्यु रूपाय धीमहि तन्नो सौरी प्रचोदयात्।

### श्री राहुः।

ॐ नख ध्वजाय विद्महे पद्म हस्ताय धीमहि तन्नो राहुः प्रचोदयात्।
ॐ शिरो रूपाय विद्महे अमृतेशाय धीमहि तन्नो राहुः प्रचोदयात्।

# ॥ सकल देवता गायत्री ॥

## श्री केतुः ।

ॐ अश्व ध्वजाय विद्महे शूल हस्ताय धीमहि तन्नो केतुः प्रचोदयात् ।
ॐ पद्मपुत्राय विद्महे अमृतेशाय धीमहि तन्नो केतुः प्रचोदयात् ।

## Dig Palaka Devata Gayatri

### ॥ दिग्पालक देवताः ॥

## श्री इन्द्रः ।

ॐ सहस्र नेत्राय विद्महे वज्रहस्ताय धीमहि तन्नो इन्द्रः प्रचोदयात् ।

## श्री अग्निः ।

ॐ वैश्वानराय विद्महे लालीलाय धीमहि तन्नो अग्निः प्रचोदयात् ।
ॐ महाज्वालाय विद्महे अग्नि देवाय धीमहि तन्नो अग्निः प्रचोदयात् ।

## श्री यमः ।

ॐ पुत्र्याय विद्महे महाकालाय धीमहि तन्नो यमः प्रचोदयात् ।

## श्री वरुणः ।

ॐ जलबिम्बाय विद्महे नील पुरुषाय धीमहि तन्नो वरुणः प्रचोदयात् ।



# References and Links

## Gayatri Temples


1. Sri Gayatri Temple at Jagatsukh near Manali in Himachal Pradesh, India. Ancient temple with intricate woodwork with modern marble image of Gayatri.
2. Sri Gayatri Temple at Shanti Kunj near Hardwar, Uttar Pradesh, India. 24 images of Gayatri near the Saptarshi Ashram with Yantras on the banks of the Ganges.
3. Bhagavat Gita Mandir. http://www.templeofcosmicreligion.com/htms/artHTM/GitaMandir.htm#anchor1846754.
4. Sri. Gayatri Temple, Pushkar, near Allahabad, India. http://www.indiayogi.com/content/holycities/pushkar.asp.
5. Sri. Gayatri Temple, Shahi Baug, Gujarat India. http://revenuedepartment.gujarat.gov.in/applications/content.asp?Content_Id=768&Title_Id=195&language=G&SiteID=8.
6. Sri Gayatri Temple, Yeshwantapura, Bangalore, India
7. Sri Gayatri Temple, Mysore, India
8. Sri. Gayatri Temple, Datta Kshetra, Srikakulam, Andhra Pradesh, India.
9. Sri. Gayatri Temple, Arunachal Pradesh, India.
10. Sri. Gayatri Temple, Badrinath, India.
11. Sri. Gayatri Temple, Chidambaram, Cuddalore District, Tamil Nadu, India


## Web Links on Gayatri


12. The Mantric Approach of the Vedas. American Institute of Vedic Studies. http://www.vedanet.com/Gayatri.htm.
13. Gayatri Info. Pandit Shri Ram Sharma Acharya. http://www.gayatri.info.
14. The Meaning of Gaytri Mantra. http://www.eaglespace.com/gayatri.html.
15. A Commentary on the Gayatri. http://www.blavatsky.net/theosophy/judge/articles/commentary-on-the-gayatri.htm.
16. The Gayatri Mantra. International Sai Organization. http://www.sathyasai.org/devotion/prayers/gayatri.html.
17. Gayatri Siddh Peeth. http://www.geocities.com/gayatrisiddhpeeth/gayatri/mantra.htm.
18. Experience The Fruit of Gayatri Meditation. Mr. M. P. Bhattathiry, Retd. Chief Technical Examiner to Government of Kerala, India. http://1stholistic.com/Prayer/hol_experience-the-fruit-of-Gayatri-Meditation.htm.
19. Gayatri Japa Day. Sri. Swamy Sivananda. http://www.spreadhinduism.com/gayatri.html.
20. Gayatri Mantra. http://www.salagram.net/sstp-Gayatri.html.
21. Gayatri Mantra. http://www.bangalorenet.com/gayatri/.

22. Gayatri Mantra. Vedanta Letters. Sanjiv R. Malkan. http://malkan.com/edufiles/gayatri.pdf.

23. The Philosophy of Gayatri : An Introduction. http://www.akhand-jyoti.org/ArticlesJF03/Gayatri.html.

24. Gayatri – The Cosmic Power. http://www.awgp.org/multimedia/gayatri.ppt.

25. The Greatest Mantra. http://pavanaputra.tripod.com/gayatri/greatest-mantra.htm.

26. Gayatri Pariwar. http://members.tripod.com/SuketuJ/Shantikunj/Main.htm, http://groups.msn.com/GayatriPariwar.


# Books/References


1. Introduction – Gayatri Mantrartha Deepika. Swami B.G. Narasingha. Mandala Publishing Group. http://www.mandala.org/cgi-bin/MDLstore.pl.
2. Gayatri Mantram Revealed. Sri Chaitanya Saraswath Math.
3. Gayatri – The Highest Meditation. SatGuru Sant Keshavdas. http://gaybooks.shoppingsavvy.com/Gayatri-The-Highest-Meditation.html
4. Gayatri Maha Mantra. http://www.arpana.org/publications/gayatri-h.htm.
5. Gayatri Rahasyam. Ashok Kumar Gaud Shastri. Chaukhamba Surabharati Prakashan, K 37/117, Gopal Mandir Lane, PO Box 1129, Varanasi 221001. Telephone : 333431, 335263.
6. Gayatri Pariwar has published several books such as Gayatri Sadhana – The Truth and Distortions, Gayatri Chalisa, Gayatri – The Omnipotent Primordial, Gayatri Sadhana – Why and How, Gayatri – A unique solutions to problems, The Process of Gayatri Yagna, etc. http://www.awgp.org/english/books/listofbooks.html.


# Music


1. Devi Gana Sudha. Saint Ogirala Veera Raghava Sarma (Sri. Gnananda Teertha). Sri. Gnananda Teertha was a great Gayatri Upasaka and has composed about 86 compositions on Sri. Gayatri in various Carnatic Ragas. He has also invented a new raga called Pranavapriya. Further details about this saint may be obtained from http://ovrs.20m.com/com.htm.